ताते पितृवनं याते यातुं भ्रातृवनं तथा । भरतः प्रार्थयामास प्राञ्जलिः प्रकृतीः कृती ॥ ७२॥

ताभ्यां सुमित्रा कौशल्याभ्यामन्तःपुरजनेन च सह भरतो भवनमभजत । अथ यथाविधिविहितौर्ध्वदैहिकं गमित चतुर्दशदिवसं दिवसकरकुलहितकरैर्नगरवृद्धैः सार्द्धममात्याः समुपेत्य मुकुटाभरणाय भरतं प्रार्थयामासुः । तत स्तान् निर्भत्स सोऽयं प्रत्यवादीत् ।

बहुभिरिह किमुक्तैस्त्यक्तसौमित्रिवृत्तिर्मुकुटमथ वहेयं युष्मदाज्ञाहि पूज्या । मम परमवकाशः पर्णशालानुकूलः क्वचिदपि विपुलायां नास्ति चेद्दण्डकायाम् ॥ ७३ ॥ इत्युक्त्वा राममेवोत्सुकमना निश्चक्राम । अनवधि रचयित्वा सत्पथे पांशुलत्वं भुवननयनसौख्यपातिकल्पञ्च कृत्वा । नरपति गृहमध्यात्तूर्णमुद्घर्षमाना कुटिलगतिरदृश्यात् मन्थरा नाम वात्या ॥ ७४ ॥ ततः केशहस्तं स्वहस्तेन गृहीत्वा तद्वधोद्यतम् । कौशल्या वारयामास क्रुद्धं रामानुजानुजम् ॥ ७५॥

ततः सान्तःपुरजनः पुरान्निर्गत्य शिल्पिवर्गसमीकृतसरणिर्भरतः पुरतः प्रसृतनरगजरथतुरगचरणक्षुण्णक्षोणीतलसमुत्कीर्णेन रेणुनिकुरम्बेन जम्बालयन्नम्बरं गङ्गां गङ्गाञ्च सुमन्त्रभणितगुहगुणनिवहः गुहानुमत्या निस्तीर्य्य दूरादेवाश्रमद्वारिनिवेशितबलभारो भरद्वाजाभिवन्दनमकरोत् । सोऽयं प्रीतमना मुनिर्भरतं तज्जननीजनमपि प्रत्येकमालोक्य सेनामप्याहूय यथोचितमातिथ्यमकुरुत ।

तथातिथ्यं चक्रे भरतबलभाजां तनुभृतां भरद्वाजः सोऽयं भ्रकुटिभटकल्पाखिलसुरः । तपस्तप्त्वा घोरं दिवि सुम-

श्रमस्तत्फलभुजो यथा तेषां तोषं चयमभिलषेयुस्तं नक्तम् ॥ ७५ ॥

इति दिनं दिनशतकल्पं तत्र नीत्वा मुनेर्निदेशेन सर्वेऽपि चित्रकूटवनोद्देशमविशन् । तत्र सन्यस्तसैन्यस्तत इतो गुहेन सह राममन्विष्यन् हव्यगन्धिना गन्धवहेन होमधूमेन च दूरादेवविभाव्य मानमचपलमृगगण मद्दृश्यरूपाभिर्वनदेवताभिरवकीर्यमाण बलिकुसुममशेषितपिशिताशन पिशाचोच्चाटनमन्त्रायमाण लक्ष्मण चापघोषश्रवण समुचित सामीप्य प्रदेशं नूतन परिकल्पित पर्णशालावास्तव्य वैखानसकुटुम्बिनी निविडित भूभागमनोकहशाखावलम्बमानवल्कलाजिनमम्बुं तरुशाखा रचितैरम्बरचरपति सेनागण करकिसलयविमुक्तैरभि नवपल्लव भङ्गशबलैः कुसुमनिकरैरभ्यर्च्यमान जानकी निवासं तरुमूल वेदिकमालम्ब्यमाण खड्गकार्मुक निषङ्गमतिथिजन सपर्यापर्युत्सुकसौमित्रि समाहृत कन्दमूल फलकलुषितैकदेशमविनाभूत जनकदुहितृ चरण नलिनविन्यासमपहसित साकेतं रामणीयकं रामाश्रमं भरतः ससम्भ्रममभजत ।

अथावासं शान्ते रहतसुकृतानामसुलभं नवाम्भोदश्यामं नलिननयनं कल्कलधरम् । जटाजूटापीडं भुजगपति भोगोपमभुजं ददर्श श्रीमन्तं विपिनभुवि सीतासहचरम् ॥ ७७॥ ततस्तस्योपान्ते जनकयजनाधीन जननां ववन्दे वैदेहीं रजनिकररेखामिव नवाम् । अरण्यानां पुण्यात्पदकमल मुद्रापरिचयात् अयोध्यासध्रीचीम विकलमवस्थां विदधतीम् ॥ ७८ ॥ खतः सिद्धं यस्मिन्नितर दुरवापं विजयते

सुमित्रापुत्रत्वादपि जगति रामानुजपदम् । यदीयाश्चिह्नन्दु प्रतिनिधि भवेदम्बुजयुगं निशीथे निर्निद्रं यदि तमपि सा चाटकृत सः ॥ ७९ ॥

तदनन्तरमन्तरूपथे प्रथिततरश्रीशोभणिदेवात्कृतोपलम्भमम्भो रुहतटाकं सुधाधारा पूरितापं भूरितापः सतृष्ण इव कृष्णासारः सरभससमुपेत्य निपत्य पादयोश्चिरतरं रुदन् दशरथकथामपि कथित्वा मैथिलीसहिताय सलक्ष्मणाय रामाय शोक मूर्च्छां प्रायच्छत् । जननीजनोऽपि तत्र निपत्य सुचिर मरोदीत् ।

विलोक्य ह्यनमेतेषां शोकोदन्वति तन्वति । अगस्त्यायित मेतस्मिन् वसिष्ठेनात्मवेदिना ॥ ८० ॥

ततः प्रपद्य संज्ञामनुज्ञया गुरोरमरसरिति विरचितसमुचितनिवापकृत्यं प्रणिपत्य राममरूद्धत् प्रवर्त्तयितुं भरतः प्रार्थयत् । विकर्त्तनकुलस्य यदनुकूलं गुणगणस्य यदनुगुणं यशोरूपस्य यदनुरूपं समाचारस्य यत्समुचितं प्राचीनंभाग्यस्य यद्योग्यं लोकगर्हणीयाय यदनर्हं सुतस्य वा यत्स दृष्टान्ताद्दृष्टमाशयं प्रकाशयन्तो भरतोपज्ञा विज्ञापना । तत्क्षणं क्षणप्रभा भङ्गुरलक्ष्मी समावेश लक्ष्माणि क्षोणीपतिशतधृतोज्झिते मुकुटे विघटिताशं रामं प्रणिपत्य सादरं मां पादुकाभ्यां परिष्कुरुतं युवामिति रघुवरचरणद्वयं स्वयमेव प्रार्थ्य परिचरयितुं स्थण्डिलशायिचरितमिव बभार भरतस्योत्तमाङ्गम् । तथाहि

त्वया मया च कर्तव्यं मत्पराचः पितुर्वचः । इति मत्वादिशद्रामो भरातीमपि भारतीम् ॥ ८० ॥ जाबालि प्रार्थना-

यामपि व्यर्थयाम् । भरतस्तदनुप्रार्थ्य लेभे लाभविदां वरः । काकुत्स्थ पादुकाकारं महार्घं मुकुटद्वयम् ॥ ८१ ॥ स एष सानुजः प्रायादयोध्यां भ्रातृशासनात् । अटवीं पितृसन्देशाद्ययौ रामः सलक्ष्मणः ॥ ८२ ॥ विलङ्घ्य विविधान्देशान् भरतो धृतवल्कलः । विषयं समुपाश्रित्य विषये विमुखोऽभवत् ॥ ८३ ॥

ततश्चायं यावदार्यस्य प्रत्यागमनं तावदयोध्यां नाध्यास्ते । तस्मिन्नवधि मतिक्रम्य चिरायति सद्य एवाग्न्यया ग्रमाश्रित्य प्राणानपि निर्न्दिष्यामीति नन्दिग्राम स्वंज्ञमाश्रम मधिश्रयत् । दाशरथिरपि ग्रमधनजनकथित निशिचरगणारचितकदनपरिहरणाय गहनजठरमवजगाहे ।

वितीर्णाच्चैर्विपिन हरिणैर्वीत भीति प्ररोहैर्दर्भग्रासैरयकृतरुचिभिः सस्पृहं वीक्ष्यमाणः । रामः पश्य प्रकृतिमहितं स्थानमवमेर्हर्षजग्राहास्य प्रमुदितधियः प्रेमपर्यां सपर्याम ॥ ८४ ॥ सीतामप्यनसूयाभिधाना अस्य पत्नी स्वभूषणै रतोषयत् । खण्डनाय वसुधावधूमनः पुण्डरीक तुहिनत्विषां द्विषाम् । दण्डकावन मवाप राघवस्त्वण्डभानुरिव मेघमण्डलम् ॥ ८५ ॥

इति विदर्भराजविरचिते चम्पूरामायणे

श्रीमदयोध्याकाण्डः समाप्तः ।

## अथारण्यकाण्डः ।

प्रविश्य विपिनं महत्तदनु मैथिलीवल्लभो महाबलसमन्वितश्चलितनीलशैलच्छविः । निशाचरदवानलप्रशमनं विधातुं शरैश्चचार सशरासनः सुरपथे तडित्वानिव ॥ १ ॥

ततः । कण्डूलापनयनपटु शुण्डालकपोलकषणविषमितानमितविकटविटपसालखण्डनिर्यातनिर्यासगन्धानघार्त्तगन्धान् विदधानैश्चाकुञ्चितगन्धैर्धूमस्तोमैरनुमीयमाना विनाभूतजलाशयःनाश्रमभागानभितश्चरतोरातिथ्यशमितमार्गश्रमयोर्दाशरथ्योरध्वानं तरसा रुरोध विराधाभिधानो यातुधानः । स एष रोषभीषणस्त्रिशिखशिखरावतंसितविविधमृगशवशतः शतहृदातनयः सीतामपजहार व्याजहार च दाशरथी । कौ युवां युवानौ कुतस्त्यौ वामाचारवत् प्रतिभाति मे वामाचारः । चीरं वपुषि जटाशिरसि करे च चण्डकोदण्डः कायमाकल्पः क्वचन कल्पलताकल्पेयमनल्पाभरणा तरुणीति । दाशरथिरपि कथितनिजान्वयो विराधाङ्के वेपमानां विदेहराजदुहितरं विलोक्य सकोपः सौमित्रिणा साकं रक्षो वक्षसि शिलीमुखान्निजघानः ।

ततः । विशिखे विशिखे तत्र विधाद्य वरवर्मणि । सीतः निक्षिप्य चिक्षेप शूलं रक्षो रघूद्वहे ॥ २ ॥ तदनु शूलमखण्डयदञ्जसा शितशिखं रघुनायकसायः । नियतमेव विराधविरोधिनां हृदयशूलमपि त्रिदिवौकसाम् ॥ ३ ॥

विराधोऽपि क्रुधा सरभससमभिपत्य स्कन्धे निधाय रामलक्ष्मणौ गतिनिरोधापराध परिहरणायैव मिहिरहिमकरौ

प्रस्थे वहन्निन्ध्य इव प्रतस्थे। रामस्तत्र विराधवधोद्युक्तं सौमित्रिमेव समिदधे।

यातु नः पदवी सेयं यातु नश्वास्य लक्ष्मण। यातु कामं तथैवेदं यातु कामं न हन्यताम्॥ ४॥ अयि कवलय मामर्मुं विमुञ्चेत्यति करुणं रुदतीमवेक्ष्य सीताम्। अरमरचयामुभावसिभ्यां विगलितभुजं भुजभारहीनमेनम्॥ ५॥

ततस्तौ त्वरितरक्षःप्रप्रहरणगवञ्चितवक्षसा रक्षसा न परित्यक्तेषु प्राणेषु। पराक्रमाविषयपराक्रमौ प्राक्रमेतामेतौ तदङ्गगलितरुधिरधारामेकेन खननक्षमायां काननक्षमायां राक्षसशरीरोचितं विकटमवटमुत्पादयितुम्। तत् क्षणमेव क्षणदाचरोऽपि सञ्जातप्रत्यभिज्ञः सन् रामं व्यजिज्ञपत् आत्मनो गन्धर्वकुलसम्भवं रम्भापरिरम्भं तच्छ्रवणकुपितवैश्रवणदत्तरक्षोरूपिणीं शापव्यापदं तस्यास्तथाविधमवसानञ्च।

रक्षो वधः प्रकृत इत्ययमेव शंसेत् स्वर्गाय गायक पदं गमितो विराधः। नागालयाय वपुरस्य वदेदितीव श्वभ्रे तदक्षिपदिषुप्रहतं स रामः॥ ६॥

तदनु नाकलोकभजनाय पुरुहूतेन समाहूतस्य भगवतः शरभङ्गस्याश्रमपदं रघुपतिरभजत। तत्र। दशरथतनयेऽपि वीक्ष्यमाणे दशरथपुलसिषेविषेव जाता। मनसिजशरभङ्गकारिद्दक्ते मनसि मुनेः शरभङ्गनामभाजः॥ ७॥

स मुनिराश्रमस्थं काकुत्स्थमातिथ्येन समाराध्य तत् सन्निधानाच्छुद्धां मन्त्रपूतामाहुतिमिव आत्मनस्तनूं तनूनपाति पातयित्वा शाश्वतं पदं समाश्रितवान्। ततः सुतीक्ष्णस्य तपसः सुतीक्ष्णस्य तस्य निदेशाद् शात्तस्मादुच्चलितः सलिलनि-

पानवस्तन्नावितजीवनाभावशङ्कया शरणाश्रयणाय लम्बमा-
ननीलाम्बुदकदम्बसन्देहावहेन नानानोकहनिवहेन पिहिता-
भोगमगस्त्याश्रममाससाद । अकथयच्च मैथिलीम् ।

तस्येदमाश्रमपदं सरसीरुहाक्षो संख्याविहीनमहिमैकनिके-
तनस्य । भर्त्ता समस्तसरितां कुपितस्य यस्य हस्तारविन्दम-
करन्ददशामवाप ॥ ८ ॥ इह समदगजेन्द्रन्यस्तहस्तातिभा-
रात् पथिविनमितशाखः सप्तकोटश्च एषः । अभिनयति
निकामं सङ्गतोच्छ्रायहानि मुनिवरकरपाताद्भग्नविन्ध्याद्रि-
मुद्राम् ॥ ९ ॥ अस्मिन् महापथधिया वदनं विगाह्य निर्ग-
न्तुमक्षमतया जठरे लुठद्भिः । वन्यैर्गजैरजगराः पिशिताश-
नेभ्यो वातापिदानवदशामुपदेशयन्ति ॥ १० ॥ तत्र । चुलक-
गतसमुद्रास्वादने कुम्भयोनेरितरकरनिरस्ता मक्षिकोत्सार-
रीत्या । गगनगतिविहीना ये घनाःपल्वलान्ते विपिनमहिष-
वेषैः केवलं ते वलन्ते ॥ ११ ॥

एवं विपिनविलोकनविस्मितमतिस्तदुटजनिकटमासाद्य
रामः शिष्यैः प्रवेशितः सकललोकवन्द्यमानचरणारविन्दम-
रविन्दभवमिव वृन्दारकवृन्दैः परिवृतं कोपहुङ्कारनिरह-
ङ्काराय नहुषाय भुजङ्गभावदूषिताय दत्तभुजङ्गमाय मति
निरोधकस्यवैपुल्ययोर्दुरवगाहमहार्णवयोर्विन्ध्यशैलसिन्धुरा-
जयोर्गाधितागाधिता तस्करवरोदरमुदरजातवेदोजितवातापि
दानवावलेपं लोपामुद्रावल्लभं सकलसरिद्वल्लभनिःशेषीकरण-
वाडवं ब्राह्मणश्रेष्ठमपास्तसमस्ताशमभ्युपगतदक्षिणाशं दृष्टै-
कतानजन्मानमपि कुम्भजन्मानं भगवन्तमगस्त्यमपश्यत् ।

प्रभामिवार्कीं तमसां निहन्त्रीं ब्राह्मीं दधान नियमेन

लक्ष्मीम् । तपोनिधिं शौर्यनिधिः प्रपन्नः स्वनाम सङ्कीर्त्य ननाम रामः ॥ १२ ॥

ततः परमहर्षेण महर्षिणा प्रणीताभिराशीर्भिः सह सुरशासनं शरासनं सरसिजासनास्त्रं सौवामणं तूणीरयुग्मं रङ्म यकोशं रङ्ञ्च प्रगृह्य तदाज्ञया गोदावरीतटप्रकटितां पञ्चवटीमसेवत । तत्र विस्तृतपक्षद्वन्द्वमध्यप्रतिद्वन्द्वशौर्यं शौर्यावस्थाप्रत्ययाय कृतापरोक्षमिव तार्क्ष्यं महानङ्घकल्पं गृध्रराजमद्राक्षीत् ।

पानेन हीनजलमब्धिमपास्य नूनं मैनाक एष मुनिमाश्रयतीति जाताम् । शङ्कामिमां रघुपतेः कथितात्मवंशस्वस्तातमित्रमहमित्यहरज्जटायुः ॥ १३ ॥

रामस्तु दशरथमिव तं पश्यन् काश्यपकुलसम्भूतं सम्पातेरनुजं अनुजरचितपर्णशालः पञ्चवट्यां कञ्चित्कालं गमयाञ्चकार । अथ कदाचिदुपचीयमान मनोभववैभवः पाककपिशकलममञ्जुमञ्जरीपुञ्जपिञ्जरीभूतकेदारप्रपञ्चः पञ्चवाणप्रयाणोचित तीक्ष्णाणवत् पत्रपुटपालङ्घ्यावश्याय विन्दु सन्दोहस्यन्द्रातपे निरानन्दतां चन्दनानुलेपने निर्लोलुपतां चन्द्रशालायां निराशतां चन्द्रकान्तस्थले निरास्थतां वातायनसेवने निरुत्सुकतां वापीकूपोपकण्ठे निरुत्कण्ठतां वासरावसाने निरादरतां वारिविहारे निराकाङ्क्षतामुत्पलमालायामुपेक्षतामुपवनभजनेऽप्युद्विग्नतां जनानां जनयन् गम्भीराभोगगर्भगृहस्य च वनेष्टिकारचितभित्ति सघनतिरस्करिणीपटलस्य च शीतोदरलोमस्यूतकम्बलस्य च कालागरुधूमस्य च काश्मीराङ्गरागस्य च निर्धूमाङ्गारभरितहसन्तिकायन्त्रस्य च सुभगङ्करः

करेणुकरनिकरवर्त्मकणायमानतुषारधूलिधूसरवासरः सरसीरुहगहनदावपावकस्तुहिनश्रंशितनासिकाधरदूरीकृतवंशकृत्यः प्रक्षीणतारुण्यपण्याङ्गनाङ्गवत्प्रयातसौभाग्यप्रपासन्निवेशस्तावद्दन्तविश्रान्तिकरः कामिनोस्तनभरगिरिदुर्गसोम्नि निर्भयनिलीननिदाघभवो दिवाभीतव्रातस्याप्यनतिभयङ्करदिवाकरस्चकोरनिकरस्याप्यनतिक्षेमङ्करनिशाकरः कादम्बकदम्बस्याप्यनतिप्रीतिकरकमलाकरः करयुगकृतस्वस्तिकाबन्धनतया नीहारान्तकभङ्ग्या हृदयकमलमिव गोपायन्तमश्रान्तदन्तवीणाव्यापारवेपमानाधरपुटतया शीतिकापिशाचिकानिर्हरणाय निपुणं मन्त्रजपमिव कुर्वन्तमविरलपुलकपालीककम्बलितकलेवरतया सकरुणविधिवितीर्णरोमकम्बलताङ्करचनमिव भिक्षामटन्तं दुर्गतवर्गं निरीक्ष्य कदाचिदपि कमलानालोकयतीति तस्मै साहाय्य इव तदीयावासतामरसकोशं नाशयन्नङ्गनमतङ्गजकरपुष्करोत्थितशीकरनिकराकारैरतिपरुषस्मरघस्मरजाततापप्रतप्तगगनाङ्गनाङ्गस्वेदबिन्दुसहचरैर्नीरमहिमहिमप्रसारैरध्वगान्तःकरणानि सीमन्तयन् हेमन्तसमयः समुदजृम्भत ।

यत्र कान्ता न पश्यन्ति क्लान्ता विरहवह्निना । निशावसानवेलाञ्च वेलाञ्च व्यसनाम्बुधेः ॥ १४ ॥

तत्र पर्णशालामध्यमध्यासीनं लक्ष्मणाग्रजमुपससर्प शूर्पणखा । तस्मिन्नुज्जृम्भितोष्णस्तनतटदर्शयताहीनसंहारकाले काले प्रालेयधाराकवचितगमनाभोगदिक्चक्रवाले । कामान्धा राक्षसी सा पतिमतिमतनोन्मैथिलीप्राणनाथे लक्ष्मीलीलारविन्दे नवपिशितधियन्तन्वती श्येनिकेव ॥ १५ ॥

ततस्तेन जानकीजानिरिति जानीहि जनममुं ममानुजमतिमनुजबलमबलावियुक्तं युक्तमाश्रयितुं तवेति रामेण प्रत्याख्याता सौमित्रिमुपेत्य यथामनीषितमभाषत। तेनापि भद्रे! तस्यार्यस्य दासोऽहं दासभार्य्यापदमनार्य्यमार्य्यायाः कुलसम्भूतायास्तस्मात्तमेव भजेथाः। किञ्च। क्रूरसत्त्वभयानककाननसञ्चारचतुरां विहाय वैदेहीं तव भवतीमेवासौ परिग्रहीष्यतीति लक्ष्मणेनाभिहिता विहितं हितमिति तदीयं वचनममनुत।

दशरथात्मयुग्मनिरीक्षणक्षणसमाकुलदुर्हृदिरियं दधौ। उभयकूलसमुत्थितशाद्वलभ्रमगतागतखिन्नगवीदशाम् ॥ १६ ॥
वृषयन्ती वृषस्कन्धं राघवं रावणानुजा। भूयः शूर्पणखा भेजे शूर्पकारातिबाधिता ॥ १७ ॥

तदनु जनकदुहितुरनितरयुवतियोग्यं भाग्यं रामस्य रामणीयकं निरूप्य पुनरेवमचिन्तयत्।

लावण्याम्बुनिधेरमुष्य दयिता मेनामिवैनं जनं कस्मान्नासृजदस्मदन्वयगुरोरुत्पत्तिभूः पद्मभूः। आस्तामेतदरण्यवासरसिके! हा कष्टमस्मिन् जने कान्तिं काननचन्द्रिकासमदशां किं निर्ममे निर्ममे ॥ १८ ॥ सीतामाहर्त्तुकामामसुलभविषयप्रार्थनोद्दामकामां सौमित्रिः शस्त्रपाणिर्दशमुखभगिनीं तामनार्य्यां निवार्य्य। कामक्रोधाधिकानामहमहमिकया प्रेङ्खतामायतानां तस्याः श्वासानिलानामकुरुत तरसा मार्गविस्तारकृत्यम् ॥ १९ ॥

ततस्तस्या निकृत्तकर्णनासिकायाः कनीयस्याः परिभवं वदने वचने च दृष्ट्वा श्रुत्वा च जनस्थानवर्त्ती समरमुखमुखरः खर

चतुर्दशसहस्रसंख्यं चतुर्दशाध्यक्षरक्षितं रक्षोबलं रामलक्ष्मणौ जिघांसुः प्रेषयामास । अथ दाशरथिर्निरीक्ष्य दिक्षु रक्षोगणमुपसर्पन्तमपसर्पभूतया तया शूर्पणखया निदर्शितसरणिमरणिमिव मन्थनात् प्रागनाविष्कृततेजःप्रसरं सीतारक्षणे लक्ष्मणमादिश्य यातुधानवधं तथाविधमतनुत । तपोधननिधनकरक्रूरनिकुरम्बमिदं पलपभाषयास्पृहयालु तालुजालमिदं परदारनिरीक्षणनिरपत्रपनेत्रद्वन्द्वमिदमिति निशितनरशरशतशकलितनिशिचरावयवानाहृत्य प्रत्युटजं दर्शयद्भिस्तपोधनाश्वसुर्हं विदध्वमिति गृध्रराजनिदेशादिव देशान्तरादापतद्भिः पतत्रिभिः कङ्कशाचोकप्रायैरनवकाशमभूदाकाशम् । तत्र निकृत्तशिरसि त्रिशिरसि विहगन्धिना शरीरस्य तवसास्रोतसा प्रेत्यापि क्रियमाणाश्मदूषणे दूषणे रोषभीषणवीक्षणस्खरः खरः राघवमाहवायाह्वयत । तत्र विपश्चिद्भिरप्यनिश्चीयमानजयापजयमनिमिषैरप्यननुसन्धीयमानशरसन्धानमोक्षमभूदभूतपूर्वं द्वन्द्वयुद्धम् । तत्र खरो गृहीतकोदण्डस्वसकृदनुभूयमाननमनोन्नमनायासः समरसमापनचतुरस्तुराननास्त्रसन्धानार्हं दाशार्हं शरासनं ग्राहयितुकाम इव रामहस्तात् प्राक्तनं चापं शरैरपजहार । सोऽपि कोपपावकपावकितानन: कुम्भसम्भवदत्तं धनुराधत्त । खरपक्षिशरासने गृहीते खरकिरणान्वयभूषणेन तेन ।

खररघुवरयोः रणः समाप्तं खरनखरायुधयोरिव क्षणेन
॥ २० ॥ खरवधपरिशुद्धे दण्डकारण्यभागे मुनिभिरभिहितानामाशिषां तादृशीनाम् । स्वयमचरमपात्रं स्वैर्गुणैर्मन्थराभूत्तदनुमनुकुलेन्दुः सानुजः शौर्यराशिः ॥ २१ ॥ तथाहि, प्राग् मन्थरेति महिषीति वरद्वयीति छद्म व्ययव्यथि-

तभूपतिभारतीति। काकुत्स्थकाननकथेति च सन्ति संज्ञाः पौलस्त्यनीतभुवनत्रयभाग्यपङ्क्तेः ॥ २२ ॥

अथ शूर्पणखा लङ्कामपि जनस्थानमिव विजनस्थानं काकुत्स्थेन कारयितुं दशकण्ठोपकण्ठे शल्येव निपत्य रामलक्ष्मणयोर्याथातथ्यं वैदेह्या देहसौन्दर्यं खरप्रमुखैः साकमनीकस्य चतुर्दशसहस्रसंख्यस्य पञ्चताकरणकारणभूतामात्मावज्ञाञ्च विज्ञापयामास।

सदण्डकायां कृतदण्डकायां स्वसारमेनां प्रथितस्वसारः। निशाम्य रामस्त्र निशम्य वृत्तं चक्रे रुषं राक्षसचक्रवर्ती ॥२३॥

ततः प्रस्थाप्य जनस्थाने राक्षसानष्टौ नष्टमतिरयं ताटकेयं चाटकमृगं पुरस्कृत्य सीताह्वयां हरिणीं ग्रहीतुं तस्याश्रमसमाससाद। मारीचोऽप्याकर्णितरावणमतिः प्रयत्नशतैरप्यनिवार्यमाणे तस्मिन् रावणे सुबाहुमेव बहुमन्यमानो गत्यन्तराभावात्तदभ्यर्थनामभ्युपेत्य जातरूपमयमृगरूपं गृहीत्वा सीतां वञ्चयितुं पञ्चवटीमगाहत। दशमुखोऽपि जलधररथस्थापितरथो दाशरथिविघट्टने कृतास्थस्तस्थौ।

विपिनमवजगाहे राक्षसानां कराटीरसकृदसकृदाविर्भवमालोक्य शोचन्। कृतरुचिरिव वर्त्म न्यङ्कुशाभां कुशानां पथिकचरणजाविन्यङ्कुरेन्यङ्कुरेषः ॥ २४ ॥ तदनु जनकपुत्रीयाच्ञया तज्जिघृक्षुर्हरिणमनुजगाहे चापमादाय रामः। समय इति च भेजे पाशमातत्य मृत्युः कुशिकसुतमखाजौ भ्रष्टमेनं जिघांसुः ॥२५॥ आकृष्य दूरमुटजादथ दर्शिताङ्गः क्रव्याद एव रघुनाथशरेण विद्धः। कात्तस्वरेण तनुतां विजहौ हतोऽस्मीत्यार्त्तस्वरेण सह रामवचोनिभेन ॥ २६ ॥

एतदाकर्ण्य विदीर्णहृदया हृदयदयितप्रेम्णा कर्त्तव्याकर्त्तव्यमजानाना जानकी जानीहि भ्रातरमिति सौमित्रिमादिदेश । ततस्त्वार्येण कार्य्यमिदमादिष्टं दिष्टदोषान् मिथ्याप्रतीतिः परा भवति भवतीं परं त्रिभुवनैक धनुर्धरस्य शौर्य्यराशेः रामार्य्यस्य कः श्रद्दधीत कौणपधर्षणनिमित्तां विपत्तिमिति प्रणिपत्य प्रत्याचक्षाणं हृदयतोदकारिण्या वाण्या मोहविह्वला सा बह्वतर्ज्जयत् । भूयोऽपि लक्ष्मणः परुषभाषणभाषिणीं प्रजावतीमेवमभाषत ।

सुमुखि ! मम सुमित्रा सत्यमम्बा यदासीत् तदभजमवितर्कं मातृसम्पर्कसौख्यम् । अहह विधिविपाकादद्य हरन्ती दुरुक्तिं त्वमसि विपिनमध्ये मध्यमाम्बा हि जाता ॥ २७ ॥

इत्युक्त्वा भ्रातृजायां भ्रातृसमीपगामिनि लक्ष्मणे तत्क्षणमेव रन्ध्रान्वेषी दशकन्धरः स्यन्दनं विहाय विहायसस्तदवतीर्य्य निजान्तःकरणेऽप्यमान्तं रागं बहिः प्रकटयन्निव धृतकाषायपटसंन्यासवेषः पर्णशालामाससाद ।

रामाश्रमाद्विगतलक्ष्मणसन्निधानात् सीतां जहार चपलः पिशिताशनेन्द्रः । मालां महोत्पलमयीं पललभ्रमेण देवालयादिव निरस्तजनादलर्कः ॥ २८ ॥

हा नाथ ! क्व चिरायसीति बहुशो व्याक्रुश्य वाष्पाविलं चक्षुर्दिक्षु विमुञ्चतीं दशरथस्याद्यामवेक्ष्य स्नुषाम् ।

रे रे रावण ! सा वधूं प्रतिरुधा मुञ्चेति गृध्राधिपो रुध्वाध्वानमनल्पकोपमकरोदग्रेवणं रावणम् ॥ २९ ॥ समभूत्समये तस्मिन् समरं समरंहसोः । मिथो मथनसंरब्धगृध्रराक्षसराजयोः ॥ ३० ॥ दशमुखरथमाशु ध्वस्तरथ्यं विस्तृतं शि-

थिलतरवरूथं शौर्यचक्रं स चक्रे। गदाभिन्दिपालशक्तिप्रासबाणासिखड्गमुष्टिखड्गविशिखतूणीपाशप्रक्रान्तः शकुन्तः ॥ ३१ ॥
राक्षसासिक्षतः क्षिप्रं पपात पततां वरः। मैथिलीपक्षणातेन पक्षपातमवाप सः ॥ ३२ ॥

तत्क्षणमन्यरथाधिरूढेन रावणेन भूयोऽपि नीयमाना जानकी ऋष्यमूकशृङ्गसङ्गतप्लवङ्गपञ्चके पञ्चचूडाधर इव विद्याधरकुमारे कस्मिंश्चित् सुग्रीवसात्कृतदशग्रीवप्रतापानलसदृशं वालिविनाशपिशुनं महोल्कापातप्रतिमं रामस्याश्चर्यप्रोत्साहनाय पुरमभिपतत्पतङ्गविम्बशङ्कावहकनकपिशङ्गकौशेयमयोत्तरीयं त्वरितमाभरणभारमपातयत् तत्पतनमपि स्वतेजःपतनमिव न पश्यन् लङ्कालङ्कारभूतामशोकवनिकां मैथिलीमनयदनयज्ञो दशग्रीवः।

अशोकवनिका लेभे राक्षसी परिवेष्टिताम्। सीतां मारुतिबालाग्निस्तम्भनार्हामिवौषधिम् ॥ ३३ ॥ काकुत्स्थोऽप्यथ रक्षसामधिपतेर्वाग्वागुरावेष्टिते हत्वा हाटकताटकेयहरिणं शार्दूलविक्रीडितम्। आगच्छन्ननुजेन तत्र गदितामाकर्ण्य वार्त्तान्ततः सीतासङ्कमलालसस्तदुटजं प्रतस्थे द्रुतम् ॥ ३४ ॥ अयं कथं स्यादिति बाष्पगर्भमालोक्यमानो वनदेवताभिः। विलोकयन् केवलपर्णशालां विलीनचेता विललाप रामः ॥ ३५ ॥ हा कष्टमत्र न हि सा किमिदं प्रहन्तमालोकयामि चटुलामिह पादमुद्राम्। मां वीक्ष्य नन्वगृहीतमृगं मुहूर्त्तमन्तर्हिता तदपि रोषवतीव सीता ॥ ३६ ॥ त्वदभिलषितपूर्त्यै वञ्चितः पञ्चवट्यामचरमचरमोऽहं मोहभाजां प्रजानाम्। तदिह सरलबुद्धे नैष रोषस्य कालः सुमु-

खि । मम सुखं किं सोढसीतावियोगम् ॥ ३७ ॥ यद्यस्ति
कौतुकमपूर्वमृगे मृगाक्षि चान्द्रं हरामि हरिणं मम
सन्निधौ हि । यावन्न मुञ्चसि मया हृतमेणमेनं तावद्-
धातु तव वक्त्रतुलां मृगाङ्कः ॥ ३८ ॥ स प्राणा चेज्जनकत-
नया किन्न तिष्ठेत मह्यं हिंस्रैः सत्त्वैर्न किल विहृता रक्त-
सिक्ता न भूमिः । गोदावर्याः पुलिनविहृतिं रामशून्यान-
कुर्य्याद् युक्तं नक्रप्रकरकवलनात् संस्थिता सर्वथा सा ॥ ३९ ॥
लोकान्तरप्रणयिनं श्वशुरं प्रणन्तुमाकस्मिकालमतिलङ्घ्य यदि
प्रयासि । विज्ञाप्य मामपि समाह्वय साध्वि तस्मै सौमित्रि-
रेव भरते निदधातु राज्यम् ॥ ४० ॥ इत्थं विलप्य दयितां
विपिने विचिन्वन् रामो न तत्र धृतिमान् न च लक्ष्मणोऽपि ।
तादृग्विधामपि दशां कथयन् स्ववाचा वल्मीकजन्म मुनिरेव
कठोरचेताः ॥ ४१ ॥

तत्र प्रारभमाणप्रयाणान् प्राणानवष्टभ्य जटायुः क्रि-
यमाणसीतान्वेषणं सलक्ष्मणं राममालक्षयन्नवोचत । आयु-
ष्मन् ! मां खड्गविक्षतपक्षतिं क्षितितले निक्षिप्य क्षिप्रतरं
जहार मैथिलीं रावण इति ।

स्वयमपि शरभङ्गस्वीकृतां भङ्गहीनां सपदि गतिमवाप्तः
संहृतायुर्जटायुः । नयनसलिलमिश्रं रामहस्तेन दत्तं दश-
रथदुरवापं प्राप नैवापमम्भः ॥ ४२ ॥

अथ दक्षिणारण्यानीं प्रस्थिते काकुत्स्थे राक्षसी काचि-
दयोमुखी नाम सौमित्रिमभिभूय तदीयेन शस्त्रेण शूर्पणखा
सिद्धिमभजत । तदनु क्रौञ्चारण्ये सरण्या प्रयातावेतौ महर्षेः
स्थूलशिरसः शापात् कौणपतां प्रपन्नः पन्नगपतिभोगभीष-

णाभ्यां भुजाभ्यां बबन्ध यथार्थनामा कबन्धः । तदनन्तरमनश्रुपात्रेषु राक्षसनेत्रेषु सदोत्पादितवारिभ्यां तरवारिभ्यां रामलक्ष्मणयोः कबन्धबाहुयुगलं कल्लोलावमिवालूयत ।

तदनु दनुकबन्धेनादरादर्थितौ तौ गिरितटभुवि देहं देहतुस्तस्य भीमम् । अकथयदथ शापापाय तुष्टः स रामं तपनतनयमैत्र्या मैथिलीं प्राप्नुहीति ॥ ४३ ॥

तस्मिन्नृष्यमूकमार्गमुपदिश्य स्वर्गं गते मतङ्गाश्रमवासिन्या शबर्याकृतां सपर्यां रामः परिगृह्य तदनुज्ञया मनोज्ञकूजितविहङ्गमगणविहारमनोहरं गहनपदमवगाह्य व्याकोशकुशेशयपरिचयकषायैर्वनदेवतालतादोलानुकूलैः कूलायतलीलापरवशशबरीवल्लभमदाम्बुचुम्बिभिः शम्बरारातिशरधिसदृशतटसहकारशिखरविसरदासवासारसीकरशेखरैर्विविधलतालासिकालास्योपदेशदैशिकायमानैः कायमानसमानाभोगलतागृहकेलिलुब्धलुब्धकपुरन्ध्रीशिथिलधम्मिल्लमल्लिकागन्धमांसलैर्मल्लिकाक्षपक्षविक्षोभक्षोदीभूतपाथः पाथेयैस्तटवनपवनैरनुकम्प्यमानः पम्पामभजत् ।

इति श्रीमद्विदर्भराजविरचिते चम्पूरामायणे

श्रीमदरण्यकाण्डः समाप्तः ।

## अथ किष्किन्धाकाण्डः ।

सतां सतां बुद्धिमिव प्रसन्नां पम्पां वियोगज्वरजातकम्पः ।
विलोकयन् लोकनिविष्टकीर्त्तिरार्त्तिं रघूणां प्रवरः प्रपेदे ॥१॥

ततस्तस्यास्तटवने नानानोकहनिवहपरिष्कृते निस्तेतरपरिभ्रमणपरभृतव्रातचञ्चूमयविपञ्ची समुदञ्चितपञ्चमांचिता सन्तताकुञ्चितपञ्चशरशरासनशरासारवञ्चितसञ्चारपथिकप्रपञ्चा प्रमदचञ्चलचञ्चरीककुलकञ्चुकितमाधवोमाधवीभूतिरुदजृम्भत ।

यत्र कान्तैर्वियुक्तानां युक्तानामपि सुभ्रुवाम । दोलाकर्म वितन्वन्ति मनांसि च वपूंषि च ॥ २ ॥ करतलैरुपचायमथेक्षणैरपचयञ्च वनेषु जनेषु च । सुमनसां मनसामपि यद्दिने विरचयन्ति विलोलविलोचनाः ॥ ३ ॥

तस्मिन् समशरसमरसमये पम्पा समन्तात् पर्य्यटन् पर्याकुलहृदयो हृदयदयितां हृदि लक्षयन् लक्ष्मणमिदमभाषत ।

आधौ सिद्धौषधिरिव हिता केलिकाले वयस्या पत्नी नेता यजनसमये क्षत्रियाणीव युद्धे । शिष्यादेव द्विजपितृसमाराधने बन्धुरार्त्तौ सीता सा मे शिशिरितमहाकानने का न जाता ॥ ४ ॥ मलयगिरिचरोऽयं मन्मथाधोरणानामथितपथिकवर्गो मारुतव्याजहस्ती । विरचयति मदीये शैत्यसौरभ्यमान्द्यैरतिविषमदसमृद्धो मानसे वप्रलीलाम् ॥ ५ ॥

एवं दुःसहविरहक्लमानुक्लमानुभावं भावसन्धुक्षणविचक्षणलक्ष्मणवचनधार्य्यमाणधैर्य्यं राघवमग्रतः सुग्रीवो विलोक्य

वालिप्रणिहितापसर्पधिया सुदूरमपससर्प। स तु संमन्त्र्य मन्त्रिभिस्तयो राघवयोरवजिगमिषुराञ्जनेयं प्रभञ्जन सञ्जातं प्राहिणोत्।

तपनपवनयोर्यः प्राप्तवान् पुत्रभावं श्रुतमखकृतवाणी विद्यया जन्मना च। स तु दशमुखकीर्त्तिस्तोमसोमस्य पञ्च-स्वरम इव तनूमान् प्राप रामं हनूमान् ॥ ६ ॥

स एव स्वीकृतभिक्षुकवेषः सविनयमेतौ आबभाषे। भवन्तौ कतरौ कान्ताकारौ कान्तारं कथमिदमवातरतां वि-चित्रतरजिष्णुकोदण्डमण्डितावपि दिनस्यास्य सुदिनत्वाद्भवन्तौ न जीमूतौ जटावल्कलयुतावपि जङ्गमत्वाद्भवन्तौ न कल्पवृक्षौ तमोपहालोकललितावपि यौगपद्य भास्करसान्निध्याद्भवन्तौ न पुष्पवन्तौ।

कुशस्तम्बेऽपि संभूतं सौरभ्यमिव भासते। तपोवेषेऽपि सौन्दर्यं युवयोर्वयोगिनोः ॥ ७ ॥ युष्मद्वार्त्तासुधास्वाद लुब्धयोः श्रोत्रयोः सुखम्। स्वयमेव गृहीतुं मे जिह्वा प्रह्वा प्रवर्त्तते ॥ ८ ॥

कश्चिदस्ति समस्तवानरपतिः सुग्रीव इति तेन भ्रातृभ-याहृश्यमूकमुपाश्रितेन युवाभ्यां सह सख्यमिच्छता प्रेषितं हनुमदभिधानं दधानं भिक्षुरूपप्रतिच्छन्नं वानरमिमं आ-ञ्जनेयं प्रभञ्जनसञ्जातं जानीतमिति। ततस्तदीयं वचनमा-कर्ण्य कर्णयुगलसुधावर्षि देवर्षिप्रतिमो दाशरथिस्तद्दर्शि-तेन पथा तमुपाश्रित्य विरचितभुवनसौख्यं सख्यं तपनतनयेन साकमग्निसाक्षिमकरोत्।

योगं वितन्वति हनूमति राघवस्य वैवस्वतेन हरिणा समव-

र्त्तिना च। मेने विधिर्घटयितुं हरिमिन्द्रपदं वैवस्वतेन हरिणा समवर्त्तिना च॥ ९॥

ततस्तत्क्षणं सञ्जातविस्रम्भाय प्रतिश्रुतवालिवधाय कथितनिजदशाय दाशरथये सुग्रीवो दशग्रीवनीयमान सीतापातितानि कानिचिदाभरणान्यदर्शयत्।

प्रत्यर्पितानां कपिपुङ्गवेन रामः स्वकान्ता धृतभूषणानाम्।
संस्कारहान्या परिधूसराणां प्रक्षालनं वाष्पजलैश्चकार॥१०॥

ततः सौमित्रिभणितनिर्बन्धसन्धुक्षितधैर्य्येण रामेणानुयुक्तो वालिवैरकारणं भानुसूनुरित्थमकथयत्। पुरा खलु निखिलरिपुकुलतिमिरनिचयमरीचिमालिनं वालिनं मायावी नाम दानवः कश्चन दुन्दुभेर्भ्राता युद्धाय रुध्वा तद्बलचकितधृतिर्गगनगरकुहरमवगाहत। तदनुगाहमानेन मानशालिना वालिना विलमुखपालनाय निहितस्तस्योत्थानवेलां प्रतिपालयन्नहं चिरकालेऽप्यतीते फेनस्यानं मांसनिसृतजसृग्पूरमवेक्ष्य भ्राता मे निहत इति निरचिनवम्। तदनु विपुलोपलपटलपिहितविलमुखः स बलो मुखबलस्तस्मै दत्त्वा स्वयमुदश्रुरुदकनैवापमवापं शोकान्धः किष्किन्धाम्। अथ विदितवृत्तान्तैरमात्यैरभिषेचिते मयि मायाविननिहत्य खरतरभुजपरिघविघट्टितविलवदनपिधानस्तरसा रसातलात् पुरं प्रविष्टोऽतीव रुष्टः प्रभ्रष्टाशयं वञ्चकः प्रणिपतन्तं प्रतिपादितयाथातथ्यं मां नगरान्निरागसमपि निरकामयत्। तदनु तदनुधावनात् कां दिशो कश्च मम पर्वतेऽस्मिन् कुतोभयसञ्चारकारणमाकर्ण्य तां पुरैकदा वालिनमतुलभुजबलमखिलकुलाचलचलनचतुरं चतुरर्णवलङ्घनज-

ह्वालं दुन्दुभिनाम वृन्दारकारिर्लुलायकायः परिभूय समरे समतिष्ठत । निहतस्य तस्य शवं बाहुबलावलेपेन बाली सकललोकविलयविलोलदनिलबलचलिततलघुतूललीलया मतङ्गाश्रमवितौ क्षिप्रमक्षिपत् ।

तत्र बालिकरानुन्ननिपतद्दुन्दुभिप्रसृतरक्तबिन्दुभिः । [illegible]टलं तदभवन्मुनेर्वनं तस्य वक्त्रमपि रोषपाटलम् ॥११॥ ततो मतङ्गशापबलाद्वालिवश्यमृष्यमूकं विमृश्यास्मिन् विमुक्तपुरनिवाससुखे सुचिरं निवसति सति मयि ।

अयमसुखय देवं देवधीमान् हनूमान् रिपुरिति भवताऽपि त्रस्तमस्तौजसं माम् । दवहुतवहधूमस्तोम इत्यम्बुवाहाच्चकितमिव मयूरं मारुतो वारिभीतः ॥ १२ ॥

श्रुत्वाथ रामः शोकोदग्रां सुग्रीवगिरम् । यद्येवं महाभाग ! माभैषीर्मम शिलीमुख एव बलीमुखस्य तस्य प्राणान् कालक्षेपमपास्य पास्यतीत्युक्त्वा तत्प्रत्ययार्थं पादाङ्गुष्ठेन प्रेरितदुन्दुभिकलेवरस्तत्कर्मणाप्यतृप्तस्य सुग्रीवस्य प्रार्थनया सप्तभुवनभवनस्तम्भसम्भावनया किल सप्तधा धात्रा वर्द्धमानपरिणाहरोहान् सप्तसालानप्यविधेययातुधानकुलविविधवधविधायकेन सायकेन विव्याध । सोऽयं सायको निकटगिरिकटकमपि पाटयामास ।

निर्भिन्नसालकटकोऽस्मि यथा तथा त्वं पौलस्त्य सालकटकं युधि पाटयेति । ऊचे शिलादलनजातरवेण नूनं तस्मै बलीमुखवराय शिलीमुखः सः ॥ १३ ॥

ततस्तत्प्रत्याहूतेन पुरुहूततनुजेन सार्द्धं तस्य तलातलयुद्धे प्रवृत्ते सति सज्जनदुर्जनयोर्भेदं रूपतोऽपि विवेक्तु-

सत्त्वमतया मनसि विचारयन् सदसि वाचं यमतामुपेत इव वाग्मी तयोरप्येकवेषकमेदोऽभेदमनवगच्छन्नमुक्तशरोऽभूद्दाशरथिः । सुग्रीवस्तु वालिबनासहनतया लब्धदैन्योवदान्य इव मार्गणापातमार्गे सदा चक्षुर्विनिपन्नपन्नगतधृतिररति दूरमपासरत् । तमेन ऋष्यमूके मूकवत्त्वपया निषण्णं विषण्णहृदयं दयालुरालोक्य त्रैलोक्यैकधन्वी रामस्तद्भेदमवगन्तु कामः कामप्यभिज्ञानमालां सुग्रीवग्रीवायां वाणनिवारणनिपुणां सिद्धौषधिमिव बध्वा भूयोऽपि वालिनमाहवायाह्वयेति तमादिदेश । पुनरप्यवाप्य किष्किन्धां पर्जन्य इव गर्जति तस्मिन् सुबामपुत्रस्तारोऽभिहितां हितोक्तिमतिक्रम्य दुरतिक्रमतया नियतेः सतारश्शरो दाशरथिशरशकलीकृतवक्षस्थलः क्षितितले सहसा पपात । अथ विदितवृत्तान्ता सन्ततास्रुनिस्यन्दकलुषिततारा तारा नगरान्निर्गत्य वारिवारितं वारणयूथपतिमिव सुग्रीवनिर्भयनिरीक्ष्यमाणमुन्नतग्रीवामुत्थातुमक्षमतया क्ष्मातलार्पितकूर्परयूगलं गलगलदस्त्रपूरघोरशरीरं शरासनशिखरविन्यस्तहस्तेन सन्निकर्षस्थितेन काकुत्स्थेन कृतसल्लापमपेताडम्बरमिवाम्बुधिमस्तोकसुखमिव सपूखमालिनं वालिनमालिङ्ग्य स्वाङ्कोत्सं सिततदुत्तमाङ्गा रघुनाथमित्यमकथयत् ।

कारुण्यं निरवधि यत्तव प्रसिद्धं शीतांशोः सहजमिवार्त्तिहारि शैत्यम् । तत्सर्वं मनुकुलनाथ ! रघ्यकीर्ते ! मत्पापात्क्षयय कथं त्वया निरस्तम् ॥ १४ ॥ एवं विधे प्रियतमेऽप्यनपेतजीवां मां राक्षसीति रघुपुङ्गव ! साधु बुध्वा । वाण विमुञ्च मयि संप्रति ताड़कारे ! श्रेयो भवेद्दयितसङ्गमका-

दिशस्ते १५ ॥ साधारणी क्षितिभुजां मृगयेति पूर्वमुक्तं त्वयैव जनसंसदि सत्यवादिन् ! । शाखामृगीं तदिह मारय मां शरेण को नाम राम ! मृगलुब्धयते मृगीणाम् ॥ १६ ॥ सन्त्यज्य पूर्वममुतस्तव बन्धुरेष भेजे यथाद्रिमकुतोभयमृष्यमूकम् । भर्त्ता ममायमपि राम ! शरैरभेद्यं प्रायो मदीयहृदयस्थलमद्रिदुर्गम् ॥ १७॥ नाहं सुकेतुतनया नच सप्तसाली वाली नच त्रिभुवनप्रथितप्रभावः । तारास्मि वज्रहृदया विशिखैरभेद्या धन्वी कथं भवसि राघव ! मामविध्वा ॥ १८ ॥ क्षितिपतितनयानां हन्त गर्भेश्वराणां किमु निरवधिमौग्ध्यं शौर्यवज्जन्मसिद्धम् । मम हृदि निरपाये वर्त्तमाने कपीन्द्रे रघुवर ! यदमुष्मै तिष्ठसे चापपाणिः ॥ १९ ॥

एवं विलपन्त्या हारयिताश्रुधारायाः परिदेवनरवैर्बाष्पाम्बुकणाम्बुवर्षैः क्षीणश्वासानिलैश्च कृताश्वास एव लब्धसंज्ञो वाली निजनन्दनमिक्ष्वाकुनन्दनै समर्प्याङ्गदङ्गसङ्गिनीं काञ्चन काञ्चनमालां शोकावनतग्रीवाय सुग्रीवाय दत्त्वा निजभुजबलप्रशान्तासुरःप्रशान्तासुरभूत् । तत्र हा सकलभुवनवक्रमत बाहुबलानलशलभायिताहितबलललित गन्धर्वगन्धसिन्धुरपञ्चताकरणपञ्चाननदशमुखभुजभुजङ्गभोगनिरोधाया हिगुंडकायितवालवलय बलिन् ! विलयं कथं गतोऽसीति बाष्पाविलमुखाबलीमुखास्तस्य राजाज्ञया यथाभिप्रेतं प्रेतकृत्यं सर्वं निर्वर्त्तयामासुः ।

अभिषिक्ते तु सुग्रीवे रामश्यामपयोमुचा । अभिषेक्तुं स्थिता मेघास्तन्महीं महिषीमिव ॥ २० ॥ आयायान्वयं

काव्यां शरदोत्थन्नसंविदा । कपीन्द्रेणार्थितो रामः किष्किन्धावर्तनं प्रति ॥ २१ ॥ न योग्या नगरप्राप्तिरित्युक्तवति राघवे । सुग्रीव प्रार्थनाप्यासीद्भरतप्रार्थना समा ॥ २२ ॥ दत्ताजुन विक्रासेन धार्तराष्ट्रान्निरस्यता । तेन जीमूतकालेन देवकीनन्दनायितम् ॥ २३ ॥ तत्र ।

अास्माकीं कुवलन्मोमसकृदपहारत्यात्मकान्त्या तदा स्वां भर्त्तारं नः सुरेन्द्रं किमपि न गणयन् वालिनं द्राग् जघान । इत्थं मत्वैव वेगझटितिघनघटाराघवस्याहवोत्थामाशामाशाव्य कृष्णास्तनितमिषमहासिंहनादं ततान ॥ २४ ॥ उपचितजीवनधारा सत्पथभाजो निरस्तसन्तापाः । भूपा इव नव मेघाः पौलस्त्यमरान्वाकुलिताः ॥ २५ ॥ तेन किल स्वपतिरतिमात्र प्रवृद्धमन्युः शतमन्युशरासनशारतरतारापथां धनतरघनरवमुखरितहरिन्मुखाभोगां कदम्बवनपवनाकम्पननिराडम्बरदादम्बकुटुम्बामम्बुदकदम्बकवलिताम्बरां शिलीन्ध्रसम्बन्धबन्धुरवसुन्धरां विकचकुटजनिचयकर्वचितसहारण्यां प्रावृषेण्यः प्रक्रियां प्रेक्षमाणो लक्ष्मणमिदमभाषत ।

अयं कालः कालप्रमथनगलाभैरभिनवैरहं यूनां यूनामपहरति धैर्य्यं जलधरैः । स्मराधरा धारापरिचयजडाः वान्ति सहसा नभस्वन्तः स्वन्तः कथमिव वियोगः परिणमेत् ॥ २६ ॥ महासमरसूचकप्रतिदिशं मनो जन्मनो मयूरगणकाहली कलकलः समुज्जृम्भते । पयोदमलिने दिने दयितविप्रयोगव्यथां नरेषु वनितासु वा दधति हन्त केका इति ॥ २७ ॥ अम्भोदरोधरविनिर्गतवारिधारा संमर्द मांसल-

समीरसमीर्य्यमाणैः । आमोद वीचिर्निचयैः कुटजप्रसूनै-
राकाशमेतदवकाशविहीनमासीत् ॥ २८ ॥ घनश्यामलपल-
स्य व्योमन्यग्रोधशाखिनः । प्ररोहा इव लक्ष्यन्ते वारिधारा
धरां गताः ॥ २९ ॥ अम्भोधिपाने सलिलेन साकमापीतमौ-
र्वाग्निशिखाकलापम् । तप्तोदरा वारिधारा वमन्ति विद्यु-
ल्लतोन्मेषमिषेण नूनम् ॥ ३० ॥

इत्थं प्रवृत्तेषु घनदिनेषु दाशरथिना कथमपि नीते तदाकारकान्तिविजितमिव शनःशनैर्मेघमण्डलं पाण्डुरमभूत् । तस्य चापस्य व्यापारवेलायां न सन्निधातव्यमित्यन्तरिक्षान्तरादन्तर्हितं किल पाकशासनशरासनम् ।

रघुपति चापघोषसमयो भवितेतिभियाप्युपरतमङ्गरं घनघटाजनितं स्तनितम् । श्वसितमहङ्गिरव जिजितः किल शान्तिमगात्परिचितकेतकीकुटजनौ पवनः पवनः ॥ ३१ ॥ तापोपशान्ति नटनात् कृतलोकहर्षा वर्षा नटी गगनरङ्गतलात् प्रयाता । अम्भोदवाद्यमचिरेण शशाम सर्वं निर्वापिताश्च सहसैव तडित्प्रदीपाः ॥ ३२ ॥

क्रमेण वाहिनी जातं सकलं भाविनीं वानरवाहिनीपतिमसहमानमिव तनिमानमभजत । दुर्दिनापाये लङ्कायामपि राजहंस निःशङ्कसञ्चारः सम्पत्स्यतीति मत्वा किल भूम्यामपि समजनि राजहंसनिःशङ्कसञ्चारः । एवं प्रोषितायामपि प्रोषितजनशेमुषीमुषि प्रावृषि ।

कामचित्प्रवृत्तपक्षभिन्न हृदयच्छिद्रप्रणालीगलन् मैत्री सारलघो प्रतिश्रुतगिरन्निवो द्रुमपादसे । सुग्रीवे चिरसंस्थितां शमयितुं रागान्धतां तादृशीं किष्किन्धां द्रुतमाप

कोपकलुषो राजाज्ञया लक्ष्मणः ।

तत्र सौमित्रि रतीव रुष्टः प्रविष्ट इत्यङ्गदेन विज्ञापितोऽप्यनङ्गसङ्गरसङ्गत परिश्रमादजातजागरः सुग्रीवस्तद्दर्शनत्रासमङ्कुलितसकलप्लवङ्गकुलकिलकिलायितेन प्रबुद्धः सचिवयोः सत्त्वप्रभावनाम्नोः प्रभावेण प्रकृतिं प्रपेदे । ततस्तस्मिन् सुग्रीवे राघवरोषस्य कारणं निरूपयति सति मुखरितहरिन्मुखोऽभूल्लक्ष्मणज्याघोषः ।

तत्रासनं द्रुतमपास्य पतिः कपीनां तत्रास नम्रवदनो घनचापघोषात् । सन्तोषपोषमिव भूरिभजन् भुजङ्गः सन्तोषनाशपिशुनात्तरुणाम्बघोषात् ॥ ३४ ॥

ततः प्रतिश्रुतकार्य्यस्य प्रोत्साहनाय प्रणयकुपितेन भ्रात्रा प्रेषित एष इति मारुतिना धार्य्यमाणधैर्य्यः सुग्रीवः सौमित्रिं सान्त्वयितुं तारां प्रेषितवान् ।

द्राग्वारुणीभजननिह्नुतराजतेजो निष्क्रान्ततारमुपशान्ततमोविकारम् । पूर्वाशया विशति सत्पथभाजि मित्रे सत्यं निशान्तसममस्य निशान्तमासीत् ॥ ३५ ॥ सा तु रामा रामानुजमासाद्य चैव मवोचत् । प्राचीनं व्यदनं सुरेन्द्रतनयाज्जातं वने भ्राम्यतः सुग्रीवस्य निराकृतं खररिपोर्वाणेन सालच्छिदा । अद्यास्य व्यसनन्तु पञ्चविशिखादासीदुपेन्द्रात्मजात् सौमित्रे तदपि प्रशान्तमभवज्ज्याघोषमात्रेण ते ॥ ३६ ॥

तदनन्तरं तारासान्त्व न प्रशान्त कोपेन सौमित्रिणा साकं तपनतनयः सविनय माश्रित्य दाशरथिं प्राञ्जलिर्व्यजिज्ञपत् । देव ! कपिबलमखिलमखिलकुलाचलनिलयमनिलतनयेनाहूतं पुरुहूत इव पुलोमजापहारिणं बलाभि-

धानमनुल्लाद्य रावणं रणे हनिष्यतीति ।

ततः । ककुभि कुलिशपाणेर्मैथिलीं तां विचेतुं विनत मयादिशायां मारुतिं प्रेतभर्तुः । वरुणदिशि सुषेणं यक्षराजाश्रितायां हरिरिति शतवलिं च प्राहिणोद्वानरेन्द्रः ॥३७

तदनु दिनेषु केषुचिद्गतेषु मासातिपातनासहो नियतमुदग्रदण्डः सुग्रीव इति सत्वरमितरेषु दिगन्तरप्रेषितेषु निवृत्तेषु प्लवङ्गवलेषु पितृपति हरिति प्रेषिता मारुति जाम्बवदङ्गद नलनील प्रमुखयोऽप्युपलभ्य सीतोपलब्धय स्तनयनाशकुपित कण्वशापनिःशेषितचराचरमपरचितचार प्रान्तरं कान्तारं तीर्त्वा कान्तारे कस्मिंश्चिदसुरमेक निरीक्ष्य रक्षः पतिरिति बुध्या युद्धाय सन्नद्धा बभूवुः ।

निशिचरपतिरित्यवेक्ष्य रोषाद्घननिनिपातनिभेन ताडनेन । असुरहितमसुं प्रहृत्य दैत्यं सुरहितमेव चकार वालिपुत्रः ॥ ३८ ॥

ततस्तारेयवचनात्तत इतो विचित्य निकट गिरिसानुशयाः सानुशयाः सलिलाशया जलचरपतङ्गपतनोत्पतनानुमीयमान पल्वलोपशल्यं किमपि बिलकुहरमवगाह्य काञ्चन काञ्चनमयं मायानिर्मितं पिहिताशानभोभागं विहिततपोभङ्गायैसुराङ्गनायै हेमायै द्रुहिणेन वितीर्णं मेरुसावर्णिदुहिता स्वयं प्रभया क्षतावन वनोद्देशं अविशन् । ततः क्षतातिथ्यायाः स्वयं प्रभायाः प्रभावेण बिलादुत्तीर्णानां समयातिपातेन पतिष्यति सुग्रीवदण्ड इति विकृतिमुपेत्य सङ्गतमनोगदेनाङ्गदेन पवनतनयवचनप्रत्ययप्रत्ययानीत प्रकृतिना सह प्रायोपवेशमुपेयुषां प्लवङ्गपुङ्गवानां परिदेवन कथाप्रस-

ङ्गेन जटायुषो निधनं निशम्य विन्ध्यरन्ध्रादिहित सम्पातः सम्पातिर्नामगृध्रराजस्तानेव मवादीत् ।

केयूय मत्त्वयवलेऽप्यभिधाय पापं वत्से जटायुषि मम भवन्तो दहन्तः । तस्मात् पुरा किरणदाहितपक्ष युग्मं तिग्मांशुमुष्णवचसा शिशिरीकुरुध्वे ॥ ३९ ॥

ततस्तैः प्रख्यापितवृत्तान्तः सम्पाति प्रोषितायुषे जटायुषे निवापाञ्जलिं निर्दृत्य पुरा कदाचिदामिषान्वेषणाय प्रेषितेन निजसुतेन सुपार्श्वनाम्ना समाम्नातं महेन्द्रमहीध्ररन्ध्रनिर्गत दशवदननीयमान जानकीपरिदेवन जानानः सज्ञचक्षुः पुनरेवमवोचत् । अलङ्कातर्येण लङ्काभिधानां यातुधान राजधानीं अधिवसति सीता दशवदननीता तत्र गच्छन्तु भवन्तः ।

किञ्च । दिवाकरप्लोषभवां ममार्तिं निशाकरो नाम मुनिर्निरस्यन् । उ.गाद वः कार्यमहार्यधैर्याः क्षणेन तां द्रक्ष्यथ राजपत्नीम् ॥ ४० ॥ इतिब्रुवाणं कृतसौहृदं तं सम्पातिमापृच्छ्यपरावरज्ञम् । प्रवृद्धहर्षाः प्रथितप्रभावाः प्रतस्थिरे वानरयूथनाथाः ॥ ४१ ॥ पर्य्याप्तं प्रम=मुपेयुषां कपीनां पान्थानां दशमुखमार्गमार्गणाय । पाथेयीकृतकपिराजशासनानां पाथोधिर्नयनपथातिथिर्बभूव ॥ ४२ ॥ सुनामपुत्रारिशिलीमुखानां स्मृत्वा गणस्तत्र वलीमुखानाम् । अपामपारस्य निधेस्स पश्यन् अवाङ्मुखो वक्तुमवाङ्मुखोऽभूत् ॥ ४३ ॥

तदनु वानरसेना मेनामवार्य्यमाणकातर्य्यामित्यमकथयदङ्गदः ।

किमिति भजथ मौनं वानरा ! मानहीनाः सगररचि-

तकूपोल्लङ्घने कुण्ठिताशाः। अकलशभव लेह्यं दुःशमं वा-
ड़वाग्नेरनवधिमयशोऽब्धिं किं समर्थास्तरीतुम्॥ ४४॥

ततः पारावारपारीणतायामात्मशक्तेरियत्तां प्रत्येकं क-
थयत्सु यूथपेषु निर्दिश्याञ्जनेयं प्रभञ्जनसम्भवं जाम्बवा-
नभिहितवान्।

हे वीरा यूथनाथाः! परिणतिपरुषः कोऽयमारोहिषादः।
कस्मादस्माकमेतज्जलनिधितरणे शक्तिरेतावतीति। स्मृत्वा
राज्ञः प्रतिज्ञामयमनिलसुतो लङ्घनायोन्मुखश्चेद्भ्रदप्रादुर्भवे-
त् किं कथयत पयसामास्पदे गोष्पदे वा॥ ४५॥ उदपतदु-
पभक्तुं मण्डलं चण्डभानोः परिणतफलबुध्या बालभावेऽ-
पि सोऽयम्। तदनुकुलिशपातक्षुण्णगण्डाय तस्मै वरमदिश-
दमेयं वायुदत्त्रै विधाता॥ ४६॥ इत्थं जाम्बवतापरावरवि-
दा सम्भुचितप्राभवः कृत्वा वृद्धिमुपेयुषास्ववपुषा त्रैविक्रमं
प्रक्रमम्। आरुह्याद्रितटं यथोचितमसौ सम्मान्य सेनाधि-
पान् आसन्नातथ सन्ननाह तरितुं वारां निधिं मारुतिः॥४७

इति श्रीविदर्भराजविरचिते चम्पूरामायणे
किष्किन्धाकाण्डः समाप्तः।

## अथ सुन्दराकाण्डः ।

ततो हनूमान् दशकण्ठनीतां सीतां विचेतुं पथि चारणानाम् महेन्द्रशैलस्य खगेन्द्रवेगः प्रस्थादुदस्थात्प्रथमानमानः ॥ १ ॥

तदनीमुदन्वदुल्लङ्घनदृढतरनिहितचरणनिष्पीड़नं सोढुमक्षमः क्षमाभृदेषनिःशेषनिःसरन्निर्झरौघतया निरन्तरनिष्पतद्वाष्पपूर इव इतस्ततो विततजीमूतवृन्दस्यन्दतया परिस्रवशिथिलधम्मिल्ल इव सन्त्रस्यमान कुञ्जरयूथतया सञ्जातश्वयथुरिव ससाध्वसतया धावमान हरिणीगणचरणकोटिपाटनोद्भूतधातुधूलिषटलितविकटकटकतया क्षरितशोणित इव तत्क्षणप्रमुद्धकण्ठीरवकण्ठरवमुखरितकन्दरतया कृताक्रन्द इव परिसरगह्वरनिविरीसन्निःसृतसरीसृपतया निर्गलितान्त्रमाल इव घूर्णमानतरुविटपकोटिताड़ितजलदवृन्दस्यन्दितशीकरनिकरकोरकिताकारतया समुपजातस्वेद इव स्फाटिततटोपलपतनदलितकीचकसुषिरसंमूर्च्छतपवनफुत्कारपरिपूरितगगनतया प्रवर्द्धमानोर्ध्वश्वास इव वचसामविषयं दौस्थ्यं प्रभजत ।

कृत्वा मारुति लङ्घनोत्थितरयात्तत्रानुयातां ततः पर्य्यायात्पततां महेन्द्रगहनक्षीणोरुहान्ततिः । मध्ये वारिनिधिप्रकाशितशिखासेतोः कृते भाविनः सूक्ष्मन्यासनिखातशङ्कुनिवहभ्रान्तिं पयोधौ दधौ ॥२ ॥ पक्षाभिघातरयरेचितवीचिमालः पाथो निधेः पवननन्दनविश्रमाय । उत्तुङ्गशृङ्गकुलकौशितनाकलोको मैनाकभूभृदुदजृम्भत सम्भ्रमेण ॥ ३॥

तत्र याता प्रत्युद्गत इति वक्षसा तमधःपातयित्वा प्रयायित्वा प्रयातमेनं सान्त्वयन् हिरण्यनाभो बभाषे ।

सागरेण कृतज्ञेन तवाध्वश्रमशान्तये । मारुते प्रेरितोऽस्म्यत्र सौम्य ! विश्रम्य गम्यताम् ॥ ४ ॥ तव पिता परित्रातः पूर्वं पर्वतभेदिनः । तस्मान्नास्ति विपक्षोऽत्र सपक्ष इति मां भज ॥ ५ ॥

एवं प्रार्थयमानमेनं संमान्य कार्य्यगत्या गतेऽसति हनूमति ।

अवलोक्य हिरण्यनाभमब्धौ वलमानं बलमानसाथिवज्ञः । गतमन्युरपेतमन्यु रासीत् पवमानात्मजस्तेऽदनादमुष्मिन् ॥ ६५ ॥

तदनु यथा पुरं लङ्कापुरं प्रतिधावतो हनूमतः सरणिमरुणदरुणसारथेः पदवीं विन्ध्यइव वदनं व्यादायद्विरसनजननीरंहसा सुरसा ।

उज्जृम्भितस्य तरसा सुरसां विजेतुं पादौ पयोधिकलितौ पवमानसूनोः । तस्योत्तमाङ्गमभवङ्गगनस्रवन्ती वीचिचयस्खलितशीकरमालभारि ॥ ७ ॥ तनुं तनूकृत्य तदा हनूमान् कृत्वावगाहं जठरे तदीये । ततो विनिष्क्रम्य स चक्रपाणेस्त्रिविक्रमस्यक्रममेव चक्रे ॥ ८ ॥ भूयोऽपि सोऽयं रघुनाथदूतश्छिच्छेद गच्छन्नखरैः खराग्रैः । नृसिंहरंहाः पथि सिंहिकाङ्गं छायानिरोधादुपपन्नमन्युः ॥ ९ ॥

तदनु पारावारस्य पारे लम्बमानशिखरिणि लम्बमान तदनुर्लङ्कापुरद्वारमासाद्य नितान्तचिन्तातन्तुसन्ततानितान्तःकरणोऽभूत् । वानरसेना कथन्तरेदिममन्तरायं वितन्वन्तमुदन्वन्तन्तरतु नाम । कथमुपयातु यातुधान राजधानीमिमां

सर्वथा वितथमनोरथो दाशरथिर्मौर्वीकृतार्णवलङ्घनः केवलमहमभवम् । जीवति वा नवेति न जानामि जानकीमिति । ततस्तत्रभवतीं सीतामवजिगमिषुराञ्जनेयः प्रच्छन्नसञ्चारहेतोरस्तमयं गभस्तिमालिनः केवलमभिललाष । तदनु शातमखस्य निःक्षेपचापस्य प्रत्यासीदति प्रयोजनवेलेति प्रचेतसे कथयितुमिव प्रतीचीं दिशं प्रविशति भगवति भास्वति । गगनतलमिदमपरमहीधरकटककान्तारसमुद्भवदावपावकशिखाश्रेणिभिः किमिह शोणितम् । अथ वा समीपसमापतत्पतङ्गरश्मि दृढतरवेष्टननिष्ठ्यूतानलतटतपनोपलजालसंमुल्लसज्ज्वालापटलैः किमापाटलम् । आहोस्विदागताय मित्राय महार्घमर्घ्यं प्रदातुं प्रमुदितचेतसा प्रचेतसा तरणिमणिगोद्भूर्यमाणमाणिक्यकिरणैः किमरुणितम् । आहोस्वित्तारापथतरङ्गिण्याः सलिलमपि ग्रसितुमुज्जृम्भितस्य चरमसागरौर्वाग्नेरर्चिः पुञ्जेन किमिहरञ्जितमिति । सकलजनस्य सन्देहसन्दोहं सन्दधाने सन्ध्यारागे समुदञ्चिते सरसीरुहश्रेणिषु पत्रपुटकपाटपिधानासु प्रतिकुसुदवनं मकरन्दभिक्षामटत्सु मधुव्रतद्विजेषु विकचकुवलयकलिकाकषणकषायेषु सार्धं वायुषु तत इतः सञ्चरत्सु तिमिरेषु कालागुरुधूमस्तोमश्यामलितेषु दिक्पालपुरगोपुरव्यूहेषु प्रतिकमलाकरं प्रेङ्खितविश्लेषवेदना पूर्वरङ्गे रथाङ्गविहङ्गानां दीनक्रेङ्कारे नक्षत्रमालालङ्कृते गगनमतङ्गजे ।

आविर्बभूव पूर्वाद्रेः शृङ्गारजीवितम् । तमस्तमालकान्तारकुठारः शशलाञ्छनः ॥ १० ॥ तत्करास्तमसा रुद्धा रेजिरे गगनाजिरे । शैवालचयसंछन्नाः सरसीव बिसाङ्कु-

रा: ॥ ११ ॥ तस्मिन् प्रदोषसमये सहसा हनूमान् कीर्त्तिच्छटा जवनिकामपनीय शनैः । आविर्बभूव सुमनः परितोषणाय लङ्काप्रवेशनवनाटक सूत्रधारः ॥ १२ ॥

तत्काले लङ्काधिदेवतामात्मना सह विग्रहं विधातुं गृहीतयुवति विग्रहां मार्गस्यार्गलीभूय भूयसा तर्जयन्तीं निर्जित्यतया वानररचितावज्ञोपज्ञं निजविलयं सरसिजासनशासनादावेदयन्त्या निहितानुमतिर्मारुतिर्लङ्कायामविकलमेव मैथिलीं विचिन्वन्नैर्ऋतिचक्रवर्त्तिनः प्रासादमाससाद । तत्र ।

एषा राक्षससार्वभौमनगरीरक्षस्समूरर्चिता तस्येदं सदनं विमानशिखरैर्बिभ्राणमभ्रावलिम् । एतत्पुष्पमाहृतं धनपतेरित्यादरान् मारुते स्तत्रादर्शयदिन्दुदीपकिरणप्रद्योतिता शा निशा ॥ १३ ॥ अपि च । आदित्यः कृतकृत्य एष भविता सीतापतेरीदृशं साहाय्यं विरचय्य कीर्त्ति ममितामादित्सुना हनुना । इत्यालोच्य तदा किल स्वयमपि ख्यातिं गृहीतुं परां लङ्कायां रघुनाथ दूतसरणौ चन्द्रेण दीपायितम् ॥ १४ ॥

एवमेव पर्यटन्न स्वप्नसुन्दरी सौन्दर्य्यमुद्रां निद्रायाप्यतिशय्य शय्यागृहे कृतसंवेशं वेश युवती परिवृतमवरोध वधूजनमप्यनिरोधेन निरीक्ष्य तत्र वितथमनोरथो मारुतिर्विरचितबहुविधचिन्ताप्रकारः प्रासादादवप्लुतः सन् अशोकवनिकायामपि मैथिलीमन्वेष्टुमभीष्टदेवता प्रणाममतनुत ।

असौ जनकनन्दिनीं तत इतो विचिन्वन् क्षणादशोकवनिकामगाद् अपगतान्य मार्गभ्रमः । परामभिलषन् गतिं श-

मथनो यथा निर्ममस्त्वयोनखिलकिल्बिषप्रशमनैक दिव्यौष-
धिम् ॥ १५ ॥

ततस्तस्यां नागतालहिन्तालतमालक्षतमालसरलवकुल-
तिलकासकलकुटजलिकुचकेतकङ्कोललवङ्गविकङ्कतकदम्बको
दुम्बरकपित्थाश्वत्थकरवकमरुवककुन्दतिन्दुकचन्दनस्यन्दनच-
म्पकचाम्पेयपनसवेतसपलाशपाटलाप्रियालप्रायैरनेकैरनो-
कहनिवहैः परिवृतां परिभ्रमन्नभ्रङ्कषविटपनिबिड़ितगगन-
प्रपञ्चां काञ्चनकाञ्चनमयीं शिंशपामारुरोह ।

तत्र तत्पत्रसंछन्नगात्रः पुत्रो नभस्वतः । न्यग्रोधदलसं-
लीनजनार्दन दशां दधौ ॥ १६ ॥ मल्लीकृतवनादिवसु हि
वने म्लेच्छेन संस्थापितां मालां देवकुलादिवामिषधिया
क्षिप्तां श्मशाने शुना । देवीमाश्रमतस्तथा स्वभवनं नक्तंचरेण
च्छलादानीतामपनीतवेषरचनामालोकयन्मारुतिः ॥ १७ ॥
पुनरयमेवं चितां ततान । एनां विना रघुपतिः परिगृह्य
धैर्य्यं स प्राण एव वसतीति विचित्रमेतत् । ज्योत्स्नां विना-
पि निवसन्निशि शीतभानुश्छायां विनापि निवसेद्दिवसेश्वरो-
ऽपि ॥ १८ ॥

एवं चिन्तयता हनूमता नीते निशीथसमये निशीथि-
नीनाथे चरमगिरिशिखरोपकण्ठ सेवासमुत्कण्ठमाने द-
शकण्ठस्तु निद्राशेषेण स्मरप्रहारेणञ्च कलुषीकृताक्षः सरस
हरिचन्दनचर्चया जानकीदर्शनेच्छया च प्रकटितरागः वैक-
क्षमालया मुकुटतटरत्नप्रभयाच तिरस्कृतनक्षत्रमालः शनैः-
शनैरविशदशोकवनिकाम् ।

रजनिचरमभागे वारसीमन्तिनीनां करतलकलिताभि-

दीपिकामार्जनीभिः दिशि दिशि परिमृष्टं यत्तमस्तत्समस्तं हृदयमवजगाहे केवलं रावणस्य ॥ १९ ॥ सोऽयं मदान्धहृदयो रघुवीरपत्नीं सीमन्तिनीतिहतभीतिरवाप पापः । आमूलपल्लवितकोमलसल्लकीति वैतानपावकशिखामिव वारणेन्द्रः ॥ २० ॥

एतद्दर्शनवेपमानतनुलता मैथिली कापुरुषविषयपरुषवचनपारम्पर्येण विदीर्य्यमाणहृदयाहृदयदयितशौर्य्यप्रत्ययादमुमेव तृणाय मत्वा तृणमन्तरतः कृत्वा स्थिता पर्य्यभाषत । अयि भोः सकलसमाचारप्रतिष्ठानिष्ठः परमेष्ठी ननु कुलगुरुर्भवतः परकलत्रगालनेत्रप्रसक्तिरयमनिरपत्रपां जनयति गोत्रजातानाम् । भूयोऽपि पञ्चवटीपरिसरममुञ्चन् प्रभञ्जन इवानुकूलः कूलोपकण्ठपरिभ्रष्टां नावमिव यदि नयेथाः ।

तथापि दयते नियतं मदीयोजीवितेशः साक्षाज्जीवितेशोऽपि त्वयि दयालुर्भवेद्धाशरथे रजे यस्य मेत्राः पात्रमपि भवितासि । किन्तु । खरप्रमुखनिशाचरबलमघनसमयसुचिरलब्धसान्द्रवसापङ्कपङ्किलितमुखमार्य्यपुत्रस्य शिलीमुखं भवन्तमन्तरेण कः प्रहृधीत निजहृदयगलितरुधिरधारया प्रक्षालयितुम् । अथवा जनस्थानसमरादारभ्य समराभावावग्रहदूषितानां सौमित्रिपत्रिचातकानां त्वदङ्गगलितशोणिताम्बुपारणान्तवायनयवनतस्रेत् कः समर्थो निवारयितुम् ।

अथ निशिचरनाथं पञ्चबाणाविभिन्नं नहि जनकसुतायाः प्रापदेकापि वाणी । जनमुपनतमृत्युं पञ्चवक्त्राहि-

दृष्टं विशति हृतशिशावेरोषवेः किन्न शक्तः ॥ २१ ॥

एवं जनकदुहितुरवधीरणाभणितिमाकर्ण्य कोपपराङ्मुखो दशमुखस्तामभितो निवसन्तीरारक्षिकाराक्षसीराहूय भवत्यश्चतुर्भिरप्युपायैरेनां मम वश्यवशां कुरुध्वमियमननुकूला चेदिमां हताशां प्रातराशाय महानसं नयतेत्यादिश्य निशान्ते प्रत्यासन्ने निशान्तमेव विवेश । तदनभीषणक्षणक्षणदाचरीणां वाक्यदोषान्मेषणात् मुकुलितहृदय पुण्डरीका पुण्डरीकयूथपरिहृतसारङ्गाङ्गनाभङ्गीमङ्गीकुर्वाणा गीर्वाणतरुणीव शापवशाद्वसुन्धरां प्रपन्ना जनकनन्दिनी चिन्तामेवमकरोत् ।

नूनं विदितवृत्तान्ते जटायुषि गतायुषि । मामिहावस्थितामार्य्यपुत्रः किन्नावबुध्यते ॥ २२ ॥

आहोस्वित् क्रव्यादमायया विपर्य्यस्तप्रकृतेः काकुत्स्थ किमुनाश्वास जायते । अथवा ।

न केवलं मामहरद्दुरात्मा कृपाञ्च रामस्य निसर्गसिद्धाम् । इदं न चेत् संश्रितवत्सलः किं भवेत्स तूष्णीं जगदेकवीरः ॥ २३ ॥

इत्थं विलप्य रघुपुङ्गवं चिन्तयन्ती कृच्छ्रान्मूर्च्छामगमत् ।

निशाचरीस्तां निरवद्य शीलां निर्भर्त्सयन्तीर्निभृतं निवार्य्य । अस्वप्नलोकोत्सवमात्मदृष्टं दुःस्वप्नमेकं त्रिजटा जगाद ॥ २४ ॥ किञ्च । उपप्लवृत्तस्य परोक्षभावादुपेत्य पृथ्वीं सुचिरं लुठन्त्याः । न मुञ्चरक्षोमुखकर्षितायाः सीतालतायास्त्रिजटाजटाभूत् ॥ २५ ॥

तदनन्तरमात्मत्यागाय स्पृहयन्त्यां मैथिल्यां मारुतिरिय-

मनुपेक्षणीया तपस्विनी नीतिममुञ्चतीति। चिरं परिगृह्य नेदीयानस्या बभूव। ततः।

देव्या दशाननवचोमयवज्रदीर्णे कर्णान्तरे व्रणविरोपणभेषजानि। विस्रम्भणार्हमयमन्वयसङ्गतानि रामाभिकीर्तनमधूनि शनैर्व्यषिञ्चत्॥ २६॥

तदनन्तरं समन्तात् प्रसारितनयना जनकतनया तस्यां शाखायां शाखामृगभुजङ्गं वीक्ष्य चकितहृदया दुःस्वप्नबुध्या सल्लक्ष्मणाय मर्त्ये भद्रमाशंसमाना जनमिमं दुराप स्वापं स्वप्नः कथमाप्नुयादिति विचिन्तयमाना मायासमायातनैर्ऋतपतिबुध्या तस्मान् मारुतपुत्रात्त्रत्राम। सोऽपि समवतीर्य्य वचनवैचित्र्याज्जनकपुत्रीं प्रत्यापयन् आञ्जनेयः कृताञ्जलिर्व्यजिज्ञपत्।

कल्याणि! तीव्रवेगेन त्वद्वियोगेन ताम्यतः। राघवेन्द्रस्य दूतं मामन्यथा मास्म मन्यथाः॥ २७॥ त्वया सह प्रस्थितचित्तवृत्तिर्विभावरीकोकसमानधर्मा। वचोऽब्रवीन् मैथिलि! सम्मुखेन त्वां कौशलं कोशलराजपुत्रः॥ २८॥ अपिच। शिरसा तव सौमित्रिरकरोदभिवादनम्। अपृच्छत् सोऽपि भद्रं त्वामधिपश्च वनौकसाम्॥ २९॥

एवमभिहितया तया सम्भूतविस्रम्भया भयानपेतया तावदनुयुक्तः पवनतनयो वालिमरणकारणं सुग्रीवस्य सख्यमाख्याय प्राचेतसचेत इव सन्तत सन्निहित रामनामकमङ्गुलीयकमस्यै प्रायच्छत्।

सोऽथ्यावहत्सा पवनात्मजदीयमान रामाङ्गुलीयकविलोकनवासरस्य। सत्यं कलाधृततमीमपि नैव भेजे पाणिग्रहोत्सवदिनं जनकात्मजायाः॥ ३०॥

ततस्तं जानकी निःसोतदर्या बभाषे। महाभाग! स-वैयास्य दुरात्मनः प्रत्यासीदति मृत्युस्तथैव सरलाभिधानया विभीषणदुहित्रा मह्यं च स्वमात्रा प्रेषितया भाषितम्। अयमप्यनार्य्यश्रीजस्तूरीयसुपायमन्तरेण ममार्य्यपुत्रस्य न स-मर्पयिष्यति। नियतमहमपि मासादूर्द्ध्वं न शक्नुयां प्राणान् धारयितुमिति। एतदाकर्ण्य मारुतिर्महानुभावे! मामै-षीः। भवन्तीं वहन्नेव तूर्णमुल्लङ्घितसागरो राघवचरणस-रसिजमुपयास्यमीत्येवं मां समर्थं समर्थदेया दूत्यभिधाय।

महामहौघ सध्रीचीं सोऽयं वृद्धिमुपेयिवान्। ययानून-मपां राशिः कुल्या तुल्यां विशेहशाम्॥ ३१॥ अथ तमुवाच सा जनकसुता मुदिता किमु तव दुष्करं चरणलङ्घितवा-रिधेः। अपितु मया सह प्लवङ्गपुङ्गव! यास्यसि चेद्रियमन-पायिनो परिणमेद्भवतः पदवी॥ ३२॥ अन्यच्च। पातिव्रत्य ज्वालायनेन यदि तं कुर्य्यामहं भस्मसात् सत्यं दाशरथेः यशोनि-शस्य न भवेदात्मोचिता पारणा। किं चैतस्य यशोनि-शापतिरपि प्रम्लानकान्तिर्भवेत् तस्माच्छासितरावणे रघुपतौ याता मम श्रेयसे॥ ३३॥ एवं व्याहृतः पवनसुतः सीतां पुनरभाषत। मायामृगेण तव मैथिलि! वञ्चितायाः शा-खामृगेण पुनरागतिरित्ययुक्तम्। एषा कथापि भुवने वि-दिता यदि स्यात् का नाम राम धनुषः प्रथिता प्रशस्तिः॥ ३४॥ किं बहुना।

इत्येतदेवं चिन्तितं यदहं रावणगृहिण्या स्तदेवनिश्चि-तम्। यत्सहशमीदृशस्य समाचारस्य तदेव प्रकाशितं यद-नुगुणं रावणापराधप्रतिक्रियायास्तदेवानुमोदितं यदनु-

कृतं कुलवधूशीलस्य तदेव कथितं यदुचितं चत्रियाणी वाणीक्रमस्येति वक्तव्यः प्रशस्त सर्वथा रामलक्ष्मणौ लङ्का-मिमां प्राप्ताविति जानकी जानीहि जनमिममनुजानीहि प्रस्थातुम् । किञ्च । काकुत्स्थेन विदितपूर्वं किमप्यभिज्ञान-नं दीयतामिति । सा तु दीर्घं निश्वस्य निश्चित्य पुरा खलु चित्रकूटतटवने तरुणतरतरुरमणीयतया मन्दीकृतानन्दन-वैभवे रघुनन्दनोपधानीकृतोत्सङ्गाया मम पयोधरपरिसरे खरतरनखराग्रविरचितविदारणं धाराधरनामानं काकं रघुपतिरवालोकयत् ।

कुशरूपकुशेशया सनाक्ष्ण विजहौ वासविवायसे स वीरः । अथ तत्कृतपयाहृताक्षिमात्रश्चिरजीवी सदधौ यथार्थ-संज्ञाम् ॥ ३८ ॥

सैषापरिचितकथास्मरणाद्विगुणदुर्दशा केशपिनद्धम-परमिदमभिज्ञानमुन्मुच्य ।

चूड़ामणिं कपिवरस्य ददौ दशास्य सन्त्रासपूजितम-हाग्निशिखं कृशाङ्गी । आदाय तं प्रणतिपूर्वमसौ प्रतस्थे माणिक्यगर्भवदनोरगतुल्यबाहुः ॥ ३६ ॥

ततः कृतकृत्य एव निर्गत्य निजागमनं निशाचरपतेः प्रकटयितुमशोकवनिकां प्रवभञ्ज प्रभञ्जनात्मजः ।

स्वकृत्यैः शाखानामवनतिमतीव प्रकटयन् अमार्गेण भ्रान्यन् परिकलितभङ्गः सुमनसाम् । द्विजानां सन्त्रासं श्रुति-मधुरवाचां विरचयन् अयं लोकोद्याने दशवदनलीलामत-नुत ॥ ३७ ॥

तदनु सरभसमारक्षिकरक्षोगणनिवेदितप्रमदवनकदन-

पितृवदनप्रेषितान् पितृपतिकिङ्करभयङ्करान् प्रहस्त पुत्रेण जम्बुमालिना सह निहत्य चैत्यतोरणमुपागतवति हनूमति पुनरपि निशमितामित निशिचरगणमारणो रावणः सचिवान् पञ्च पञ्चाननपराक्रमान् प्रहस्तप्रमुखान् बलीमुखं जीवग्राहं गृह्णीध्वमिति प्राहिणोत्। तत्र तानपि पञ्चतान्नीत्वा तोरणपरिघेण मुहुर्मुहुर्दोर्गर्वितदासोऽहमित्यात्मानमुद्घोषयन्तं हनुमन्तं नियन्तुं निखिलरक्षसामध्यक्षमक्षकुमारमाक्षिपत्।

वक्षः सङ्घट्टचूर्णीकृतकनकमहाभित्तिचैत्योत्थधूल्या नक्षत्राणामकाले सरणिमरुणयन् वीरलक्ष्म्या समेतः। रक्षःशूराख्यशारान् क्षितितलफलके क्षेपणीयान् हनुमानक्षक्रीडां विधातुं दशमुखनगरीचत्वरे तत्वरेऽसौ॥ ३८॥

तत्क्षणं क्षणदाचराणामनिमिषितामेव निष्पादितपदङ्गनिक्षेपकृत्यश्चैत्यप्रसादमुत्पाटितस्तम्भजातं जातवेदसा दग्ध्वा भूयोऽप्युपाश्रिततोरणः समीरणसुतो बभूव। एनमपि वृत्तान्तं श्रुत्वा कुपितस्य पिशिताशनपतेर्युगपदेव निपेतुः पुत्रमुखामजिति समतिहेतोर्विंशतिदृष्टयः।

अनिमिषभुवने वा व्योम्नि वा भूतले वा रणमुपगतं त्वां वीक्षितुं कः समर्थः। इति नुतिवचनेन श्लाघयन्तं घनादं प्लवगनिहनयेति प्राहिणोद्राक्षसेन्द्रः॥ ३९॥ नेतुं शोकरसं निशाचरपतेर्हन्तुञ्च मन्त्रमक्षसां तस्यान्तःपुरयोषितां रक्षयितुं मानं विना रोदनम्। सूर्य्याचन्द्रमसोः प्रवेशविकलां लङ्कापुरीमग्निना शुद्धिं कर्तुमसुश्रवासवजिता जातोरणस्तोरणे॥ ४०॥संग्रामदुर्दिने तस्मिन् जहर्ष शरवर्षिणि। वर्हीव

मेघनादेन मेघनादेन मारुतिः ॥ ४१ ॥

तदनु यातुधानप्रबलप्रधाननिधनक्रुद्धो विविधायुधवैतथ्यं विमृश्य विजयश्रीसगन्धं गन्धवाहनन्दनं चतुराननास्त्रेण बबन्ध दशकन्धरात्मजः । तेन दिव्यास्त्रेण विवशशरीरमेनं पिशिताशनाः शोणवल्कलैर्बबन्धुः ।

स मारुतेर्नैर्ऋतपाशजन्मा बन्धोऽभवद्बन्धनमोक्षहेतुः ।
पुरा पुलस्त्यान्वयपांशुलेन बन्दीकृतानां सुरसुन्दरीणाम् ॥ ४२ ॥

तदनन्तरमितरबन्धनासहतया निजातङ्कस्य दिव्यास्त्रस्य प्रभावं विभावयन् विभावरीचरपतितनूजः पवनतनयं निजपितृसमीपमुपनिनाय ।

सोऽयं ददर्श दशकन्धरमन्धकारि लीलाद्रितोलनपरीक्षितबाहुशौर्यम् । बन्दीकृतेन्द्रपुरवामवधूकराग्रव्याधूतचामरमरुच्चलितोत्तरीयम् ॥ ४३॥ आपाटलाधरपुटान्तविराजमानदंष्ट्रामहःप्रसरशारशरीरकान्तिम् । सन्ध्याम्बुदान्तरितमध्यसुधामयूखरेखाभिराममिव वासवनीलशैलम् ॥४४॥ संग्रामकेलिपरिघट्टनमग्नभग्नदिग्दन्तिदन्तक्षतमुद्रभुजान्तरालम् । छायात्मना प्रतितरङ्गविराजमानशीतांशुमण्डलसनाथमिवाम्बुराशिम् ॥ ४५ ॥ निःश्रेयसः प्रणायिनीं पदवीं निरोद्धुं त्रैलोक्यपापपरिपाकमिवात्तरूपम् । सूर्येन्दुपावकमहांसि तपोबलेन जित्वा यथेष्टमभिषिक्तमिवान्धकारम् ॥४६॥ सोऽपि प्लवङ्गममवेक्ष्य समीरपुत्रं चिन्तीयमानहृदयः पिशिताशनेन्द्रः । कैलासशैलचलनागसि शापदायी नन्दीश्वरः स्वयमुपागत इत्यमंस्त ॥ ४७ ॥

ततः प्रहस्तेन विहितविविधानुयोगः प्रत्यभाषत रावणं मारुतिः । अयमहमहमामधिपतिकुलतिलकस्य सत्यसन्धस्य पितृनियोगसमुपनतवनवासनिरतस्य शूर्पकारातिवाधितशूर्पणखाप्राप्तवैरूप्यस्य कुपत्खरप्रमुखनिशिचरबलपलालजालकृत्यानलकल्पशिलीमुखस्य कपटहरिणहननसमयसमुषितदारान्वेषणसञ्जातसुग्रीवसख्यसमुत्खातवालिकण्टकस्य दुष्टत्तत्तवंशवनपवनसारथेस्तपोनिधेर्जादग्न्यस्य भुजबलावलेपलोपहेतोः श्रीमतो दाशरथेर्दूतोऽहं सीतामार्गमार्गणाय दिशि दिशि तत्तनतनयप्रेषितानां वानराणां एकतमः समुद्रलङ्घनजङ्घालस्तव नगरप्रमदावनसीम्नि रघुवरधर्मदारान् प्रणम्य प्रतिष्ठासुर्मदीयमागमनं प्रकाशयितुं मथिताशोकवनिकानोकहनिवहस्त्वद्दर्शनकुतूहलेन केवलमनुभूतनैर्ऋतलूतातन्तुसन्नहनस्तव परिसरमुपासरम् ।

आनाकलोकपरिकीर्तितसच्चरित्रमत्रोपरुद्ध्य रघुवंशपतेः कलत्रम् । वैतानवेदिजनितं पवमानबन्धुं वस्त्रेण बद्धमविनीतकथं यतेथाः ॥ ४८ ॥ प्रेङ्खन्ती पिशिताशया रणमुखे सौमित्रिपत्रिपत्त्रतं त्वद्गात्रं परितः ततत्रिपरिषच्छलच्छविं मागमत् । द्राक् पौलस्त्यपुनस्त्यवंशविलये सम्भाविते त्वत्कृते कान्तानां नयनान्तशान्तसलिलं मा भून्निवापोदकम् ॥ ४८ ॥ बद्धादरोऽपि परदारपरीग्रहे त्वमिक्ष्वाकुनायककलत्रमनार्य्यमागाः । वाताशनोऽहमिति किं विनतासुतस्य श्वासानिलाय भुजगः स्पृहयालुतालुः ॥४६॥ बाहुचन्दननिषङ्गकोटरान्निर्गतो रघुपतेः शरोरगः । प्राणवायुमविनीततावकं कालयापनमप्राप्य पास्यति ॥ ५० ॥ किं बहुना । मायाम्गे

समरनाटकसूत्रधारे शाखामृगे च भवतः प्रतिकूलवाते । दृष्टोद्यमस्य रघुनायकसायकस्य मुक्त्वा प्रणामकवचं क्व च किमन्यत् ॥ ५१ ॥ एतन्निशम्य कुपितः पिशिताशनेन्द्रः प्राणानमुष्य हरतेति भटानवादीत् । आजन्मसिद्धमतिवल विभीषणस्तं दूतो न बध्य इति शास्त्रगिरा रुरोध ॥ ५२ ॥

रावणोऽपि विभीषणभाषणमङ्गीकृत्य प्लवङ्गमानामङ्गेषु लाङ्गूलमेव वरम् । तदेव कार्पासवाससा संवीतं वीतिहोत्रसात्कृत्य चत्वरे चत्वरे दोषानुद्घोष्य सप्रहारं नगरं परितः सञ्चारयतेति राक्षसानादिदेश । तेषु तथा कुर्वाणेषु ।

निर्णयाविषयमस्य बालतः कर्णिकारनिकुरम्बकर्बुरः । निर्निमेषगणभाग्यसञ्चयादुन्मिमेष भगवानुषर्बुधः ॥ ५३ ॥

एतद्वृत्तान्तमारक्षिकराक्षसीगणेन गर्वोदीर्णं वर्णितमाकर्ण्य दूयमानमानसा जानकी हुताशनमुपस्थाय हनूमतः शीतो भवेति प्राञ्जलिः प्रार्थयत ।

घोरस्य राघवकलत्रतपोमयाग्नेर्माभूवमिन्धनमहं क्षणमित्यवेत्य । शैत्यं वितत्य दहनः पवमानसूनोर्बालाग्रसीम्नि मणिदीप इवाबतस्थे ॥ ५४

तदनु पवनतनयोऽपि पुरमिदं न खलु सुव्यक्तं नक्तमालोकयम् । तस्मादनलसाक्षिकमेव पुरमखिलमालोकयामीति यामिनीचरगणं परिचिततोरणपरिघेन जघान ।

सीताभिधानकमलां प्रभवे प्रदातुं लङ्कार्णवं क्षुभितसैन्यभीमम् । वेधा ममन्थ किल रज्जुभुजङ्गराजभोगावृतेन पवनात्मजमन्दरेण ॥ ५५ ॥ अथ लङ्कायां दह्यमानायाम् । रक्षस्त्रीवदनारविन्दरजनीं विश्वम्भरावर्हिणी वर्षारम्भदशां

दशाननयशः कादम्बकादम्बिनीम् । वैधव्योचितवेषनिश्चित-मनोलङ्काबधूटीजटां वैदेह्यास्त्रिजटासमां समकिरद्धूम्यां हनूमान्दिवि ॥ ५६ ॥ अपि च । एतद्विक्रमवीक्षणेन जनिता-नन्दवाष्पोद्गतिं रक्षोनाथभयात्पिधातुमनसा विद्याधराणां तदा । व्याजव्याहृतये यया परिणमेद्धूम्या तथा जृम्भते स्वर्लोकेऽपि कलिन्दशैलतनया कल्लोलशङ्कावहा ॥ ५७ ॥ आदौ नीलांशुकयोस्तदनु मरकताबद्धनीवीविभूतिः कस्तुरी-पङ्कभङ्गोक्षणमपि विकचेन्दीवरस्रक्सपत्नी । पश्चात् स्निग्धा-ञ्जनाभा जघनकुचतटीकण्ठनेत्रेषु जाता दिक्कान्तानां तदानीं दशमुखनगरीदाहसम्भूतधूम्या ॥ ५८ ॥ हा तात ! हा जन-नि हा सुत ! हा स्वहाय ! हा पुत्रि ! हा प्रियसखि क्व नु ! ह, हतोऽस्मि !। इत्यादि पौरपरिदेवनभारवाग्मिराद्भरि रावणपुरी शिखिना परीता ॥ ५९ ॥ यैर्वृन्दारकसुन्द-रीजनमुखे नीराजनं निर्मितं निर्मेघे गगनेऽपि यैर्विरचिता सौदामिनीसंहतिः । ते दिव्याण्यपि वासराणि ना गता नि-र्वाणमौर्वीनलज्वालाडम्बरमम्बुधौ विदधिरे बालानलोद्यत्क-णाः ॥ ६० ॥ आदीप्यमानपवनात्मजवालसङ्गात्प्रज्ञारशेष-विभवामवलोक्य लङ्काम् । व्योम्नि स्थिता निशिचराः स्वगृ-हाणि ननु निर्वापयन्त इव नेत्रभवैः पयोभिः ॥६१॥ चक्रे शक्र-जिदाज्ञया रणमुखे यत्कर्म रक्षोगणस्तत्कर्तुं क्षणदाचरक्षि-तिभुजा युक्तोऽप्ययुक्तोऽभवत् । सप्तार्चिश्च हनूमता परिचितो लङ्कामधाक्षीद्यया तत्पित्रा मरुता युतोऽपि न तथा दाह-क्रियायां पटुः ॥ ६२ ॥ तस्मिन् हनूमदरणिप्रभवे कृताशे शुद्धिं विधाय पतिमेव समेतुमैच्छत् । लङ्केश्वरेण रणकेलि-

कुतूहलेन बाहोर्बलादपहृता सुरराजलक्ष्मीः ॥ ६३ ॥ वाचामिदानीं किमु विस्तरेण लङ्कापुरीं रावणबाहुगुप्ताम् । काकुत्स्थदूतोऽयमुपेत्य चक्रे कृतान्तदूतस्य सुखप्रवेशाम् ॥६४॥ पौलस्त्यपातकिसमागमजायमानमेनः पुनान इव वानरयायजूकः । निर्वर्तिताश्वविजयो निजबालवह्नौ हुत्वा प्रकाशसमिधः सुगतिर्बभूव ॥६५॥ लङ्कादाहेऽप्यनार्तां रघुपतिदयितां चारणोक्त्या विदित्वा सानन्दस्तां प्रणम्य प्रतिगमनविधौ प्राप्य तस्या नियोगम् । आरुह्यारिष्टशैलं निधिमपि पयसां वेगमुत्तीर्य वेगाच्चक्रे गत्वा महेन्द्रं प्लवगबलपतीन् पूर्णकामान् हनूमान् ॥ ६६ ॥

अथ यथार्हं सैन्याधिपान् सम्मान्य मारुतिरेतैरनुयुक्तः स्ववृत्तान्तमखिलमाख्यातवान् । तदनु पवनतनयवचनमुदिता वानरवरूथिनी यूथनाथानुयाता तद्दर्शनजनितमानन्दं दाशरथौ सुग्रीवे च संविभज्येव विवक्षितुम् । अहमहमिकया धावन्ती मध्ये सरणिदधिमुखकृता वनं मधुवनं हनूमदनुमत्याभिभूय मधुपानसुखमनुबभूव ।

अथाब्रवीद्गिरिवतुङ्गमङ्गदं कृताञ्जलिर्दधिमुख एष गोपवान् । वलीमुखान् मधुभजने शिलीमुखान् भवानिमान् झटिति निवारयेदिति ॥ ६७ ॥ अयमप्येनमवोचत । दशमुखपुरमध्ये वीक्षिता मैथिलीति श्रवणमधु वितीर्णं येन वीरेण मह्यम् । दधिमुख यदि सोऽयं भाषते कोऽनिरुध्यान् मधु पिबतु यथेष्टं वाहिनी वानराणाम् ।

तदनु भयविवेशसमुन्नतदधिमुखवचनविदितमधुवनकदनपरिभवितजनकदुर्हितृदर्शनजनितप्रमदभरभरितस्तपनतन-

यत्तनुविकृतिमतनुत तदभिमुखागमननिमित्तसम्पत्तिम् ।
आरुह्याद्रिमथावरुह्य विपिनान्यास्वाद्य नानाफलान्यास्फोट्य
प्लुतमारचय्य वदनैपाराद्य वाद्यक्रमान् । आलिङ्ग्य द्रुमस-
क्रमं मदवशादाधूय पुच्छच्छटामारादाविरभूदहं प्रथमिका
पीना कपीनां चमूः ॥ ६९ ॥ निद्राक्षयादरुणितेन समीर-
पुत्रः सौमित्रिनेत्रयुगलेन निपीयमानः । चूडामणिं करतले
कलयन् ववन्दे पादारविन्दयुगलं भरताग्रजस्य ॥ ७० ॥
अक्लेशसम्भूतगतागताभ्यां निस्तीर्णविस्तीर्णमहार्णवोऽपि ।
आनन्दसिन्धौ पृतनासमक्षमक्षस्य हन्ता नितरां ममज्ज
॥ ७१ ॥ आनीतचूडामणिसन्निधानादाविःप्रमोदेन रघूद्वहे-
न । तत्रानुयुक्तः पवमानजन्मा विज्ञापयामास कृतप्रणामः
॥ ७२ ॥ लङ्कापुरोपवनसीमनि राजपुत्रीमालोकयं निशि-
चरीगणबाध्यमानाम् । केनापि पातकवशेन सुपर्णलोके ब-
न्दीकृतामिव भुजङ्गमराजकन्याम् ॥ ७३ ॥ देव्यास्त्वदी-
यान्वयकीर्तनेन त्वन्मुद्रया च व्यपनीय शोकम् । वार्त्ताम-
भिज्ञानमयी मया च प्रस्थातुकामः परिपूर्णकामः ॥ ७४ ॥
ब्रह्मास्त्रविवस्तजयन्तकृत्यां कथामभिज्ञाप्य वने प्रवृत्ताम् ।
चिरं रुदन्त्या जनकेन्द्रपुत्र्या चूडामणिः प्रेषित एष तुभ्यम्
॥ ७५ ॥ किं बहुना । देव तस्याः प्रतिष्ठासूनसूना शोक-
पालितान् । मुद्रयित्वा प्रपन्नोऽहं त्वदभिज्ञानमुद्रया
॥ ७६ ॥

इति श्रीविदर्भराजविरचिते चम्पूरामायणे

श्रीमत्सुन्दरकाण्डः समाप्तः ।

अथ युद्धकाण्डः ।

दृष्टे यत्र यदृच्छयापि वचसां देवो पुरी वर्त्तते सारस्यं महदभ्युदेति सदसि प्रागल्भ्यमुज्जृम्भते । जायन्ते सकलाः कला अपि नृणां जागर्त्ति कीर्त्तिर्नवा चेतः स्निह्यतु तत्र देशिकपदाम्भोजेच भोजे मम ॥ १ ॥ भोजेन तेन रचितामपि पूरयिष्यन् अल्पीयसापि वचसा कृतिमत्युदाराम् । न व्रीडितोऽहमधुना नवरत्नहारसङ्गेन किं न हृदि धार्य्यत एव तन्तुः ॥ २ ॥ मुद्रामुद्रितजीवितां जनकजां मोहाकूलं राघवं चूडारत्नविलोकनेन सुचिरं निध्याय निध्याय च । प्रारेभे हृदि लक्ष्मणः कलयितुं पौलस्त्यविध्वंसनं धीरः पूरयितुं कथाञ्च विमलामेकेन काण्डेन सः ॥ ३ ॥ आनन्दमन्थरमनन्तरमाञ्जनेयादाकर्ण्य वृत्तिमनघाञ्जनकात्मजायाः । दृष्टिर्दशाननरुषा परुषायमाणा बाणासने परिदधे प्रभुणा रघूणाम् ॥ ४ ॥

अथ सुग्रीवोऽपि दशग्रीवकुपितराघवावलोकनद्विगुणीकृतरणोत्साहः साहायकमनुपालम्भनन्धुमिव सिन्धुमवधार्य्य धार्य्यमाणधैर्य्यावगाढ़मतिः । अधिरूढ़त्रिकूटशिखरां लङ्कामधिगन्तुममन्दकुमुदनलनीलप्रमुखमपि वलीमुखानीकं समनीनयत् ।

वारिदादपि च रामनामतः पूरिता पुनरपाङ्गधारया । तत्क्षणं प्रतिचचाल दक्षिणं वाहिनीशमखिलापि वाहिनी ॥ ५ ॥

ततः क्षणेन समचक्रचलितऋक्षसमुदाये कुमुदामोदकारिणि शरभाधिकप्रसादशीले नीलेन्दीवरानन्दिनि दशा-

नन्दिग्राक्रमशस्यग्रतेजसि समारूढतारानन्दनलक्ष्मणानुगते सरभसमुदयसानुमन्तमिव हनूमन्तमधिरोहति निशाचरतिमिरहरणनिस्तन्द्रे रामचन्द्रे समन्ततः कन्दलितबहलहरिजालकोलाहलभरितहरिदन्तरो निरन्तरास्कन्दितनिकटकान्तारावलिर्वलीमुखबलमहाम्बुधिः समसम्भ्रममुज्जृम्भत ।

उत्तासकासरमृदङ्ग्चितपञ्चवक्त्रं वित्रस्तहस्तिविशराहचमूरुयूथम् । आलोललोचनतरङ्गकुरङ्गशावमासीदसीमविपिनं कपिनर्मघोषैः ॥ ६ ॥ सैन्यैस्ततो रघुपतिः सरितां निवेशं वेशन्तयन्विरलयन्विपिनान्तराणि । आरुह्य सह्यमपि शैलमरुह्यवातं मन्दानिलैकनिलयं मलयं जगाम ॥ ७ ॥ गत्वा च तमद्रिं सौमित्रिमिदमवादीत् । अमी तटसमीपनिर्झरतरङ्गरिङ्खत्पयोजडीकृतपटीरभूरुहकुटीरसंसारिणः । मनो विधुरयन्ति मे मलयमेखला मेदुरा दुरासदवनप्रियप्रियतमारुता मारुताः ॥ ८ ॥ इत्यालपन् करुणमेष निरुद्धवेलं शैलं महेन्द्रमधिगम्य मही महेन्द्रः । आवर्त्तमुद्रितमिवान्वयभूपतीनामक्षय्यकीर्तिनिधिमम्बुनिधिं ददर्श ॥ ९ ॥ दृष्ट्वा च तमद्भुताकृष्टमना रामस्तदिदमाचष्ट । द्रष्टुं नालमगाधतां फणिपतिः सीमान्तरेखा दिशो द्वीपाः सैकतमण्डलानि तदयं दूरे गिरां वारिधिः । येषामेष सुखादखानि नखरैर्येनाथ वा पूरित स्तेषां नः कुलभूभुजामविहतस्तस्मै महिम्ने नमः ॥ १० ॥

अथ हरीन्द्रोऽपि महेन्द्रोपान्तकान्तारशोभिनि लोभनीयमलयबालानिले वेलावनप्रदेशे । दाशरथेर्निदेशेन निवेशयामास बलमखिलम् ।

सरसघटीरकुञ्जवनसञ्जवनाभिपतन् मृगमदगन्धगन्ध-वहमेदुरिते जलधेः । तटनिकटे दरस्फुटिततालरसालफ-लैरुदितमदा विचेरुरुदरम्भरयो हरयः ॥ ११ ॥

अनन्तरमपरमिव चलितं महाम्भोधिमङ्गोधिरोधसि कृतसंवेशं रोदसी लङ्घनविशृङ्खललाघवं राघवानीकमनी-कोन्मुखञ्चारमुखादवधार्य्य धार्य्यमाणहृदयान्तकः पङ्क्ती-नचरण इवैरावणो रावणो विधेयं परमजानन् जानकीमप्य-विमोक्तुकामः कामपरतन्त्रितो मन्त्रिभिः समं समाजमाज-गाम ।

रहस्तदानीं रजनीचरेन्द्रः प्रहस्तपूर्व्वानिदमाबभाषे । इदन्तु मे वाञ्छितमौचित्यं वो वदन्तु यद्वैरिजयोचितं नः ॥ १२ ॥

अमी च पुनराश्रयन्तो विज्ञापयामासुः । देव ! जीवत्सु भवदाज्ञापरेष्वनुचरेषु परमात्मासु कस्मादयमवापो दुःखा-पोरुभुजपञ्जर नीतां सीतां जातु न जहातु नाथ इत्यभिद-धानेषु प्रधानेषु रम्भोपहितहटात्कारसम्भवमम्भोजसम्भव-शापमन्तरायमावेदयन्तं दुर्नयन्तमग्रजन्मानं सम्मानयन्विन-यविज्ञानभूषणो विभीषणः सरोषमिदमवादीत् ।

अहह विधिनियोगादघनक्तञ्चरेन्द्र त्वमसि परकलत्रे दु-र्निवारानुरागः । अरुणदवशिखायामामिषग्रासमोहादविर-तकृतजिह्वाचापलः केसरीव ॥ १३ ॥ आकर्ण्य किन्नरमुखा-दनघे स्ववंशे काकुत्स्थदारहरणोपनतं कलङ्कम् । हा हेति मीलितदृशः करयोर्युगन्तदष्टौ श्रुतीरपि दधातु कथं विधातु ॥ १४ ॥ पश्येदानीमुदधिपरिखापालिता कुत्र लङ्का वाचा-तीतः क्व नु वनचरादागतो दुर्विपाकः । कर्तुं नक्तञ्चरपरि-

भवं कापि मायैव शङ्के जाता सीता धरणितनया जानकी मैथिलीति । किं बहुना । न गणयसि यदि त्वं वानरं वानरं वा ननु परिचितवीर्य्यौ जिष्णुभू कार्त्तवीर्य्यौ । न कलयसि यदि त्वं नन्दिशापञ्च धातुर्वरमपि नरवर्जं दुर्जयो दैवयोगः ॥ १६ ॥

इत्यादिनीति सहितं हितमभिहितवन्तं निजमनुजमवज्ञाय ज्ञातिरयं प्रत्यतिपक्षः शिक्षणीय इति शंसन्तं नृशंसन्तमरुन्तुदरोषणभाषणो विभीषणो विहाय विहायसि समुत्पतन्तमनूत्पतद्भिश्चतुर्भिरमात्यैः सममतीत्य वारिधिं दूरतएव सवितर्कमुदग्रीवान् सुग्रीवादीनन्तरिक्षगत एवमाचचक्षे ।

पौलस्त्यमग्रजनुषं परुषम्ब्रुवन्तं सन्त्यज्य बान्धवजनञ्च विभीषणोऽहम् । रामं विरामभिहविद्विषतामवापमापन्नदैन्यहरणं शरणं ममेति ॥ १७ ॥

अनन्तरमतिकरुणं समीरयन्तं समीरभुवा च सप्रत्यभिज्ञविज्ञापितं निशाचरपतेरनुजं निशम्य तदा तदा गमनाय किं कारणमिति शङ्कापरवशे निवेदयति हरीशे दाशरथिरपि दयमानः स्मयमानो मधुरमिदमभाषत ।

अभयागतोऽयमपयाति चेदमुना रघवो भवन्ति लघवो न किं सखे ! । अनुजोऽयमस्तु तनुजोऽथवा रिपोः करुणापदं हि शरणागतो जनः ॥ १८ ॥

तदनु हृदयविदा हनूमता सरयमानीतो विनीतोऽयमाशरपतिरवन्दत दाशरथिम् ।

रामस्तमाह विनतं रजनीचरेन्द्रं दत्तं तदद्य भवते

दशकण्ठराज्यम् । अस्मिन्नुदाहरणमग्रज राज्यभोक्ता सानुप्लवः प्लवगमण्डल सार्वभौमः ॥ १९ ॥ श्रेयः पदं त्वत्पदमुदेति विधेः प्रसादात् प्रायस्तदद्य फलितं हि विभीषणे यत् । देवातपत्रसहितं पदमस्य गृह्णन् एकातपत्रसहितं पदमेष भेजे ॥ २० ॥

असौ पुनरग्रत एव भरताग्रजापाङ्गसुधातरङ्गाभिषिक्तोऽपि पुनरुक्तराज्याभिषेकः सकलविस्रम्भभाजनतया सुग्रीव इवापरो दशग्रीवबलमखिलमावेद्य सद्य एव लङ्कापुरसमास्कन्दनाय सेनासमुत्तरणहेतुं सेतुं विधातुमाराधयतु वारान्निधिमिति सविनयमेनं विज्ञापितवान् ।

अथ वारान्निधिन्ध्यायन्नम्भोधिहृदये शयः । व्यानशे दर्भशयनं वेदीमिव हुताशनः ॥ २१ ॥

तत्र कुशास्तरणमध्यमध्यासीने निध्यानवति देवे रामचन्द्रे नियन्त्रित इव नियतिवशान्निशा त्रयमपि प्रसादं नाससाद यादसाम्पतिः ।

व्यापारयन्नथ विलोचनकोणमब्धौ कोपारुणं कुटिलितभ्रू कुटीविटङ्कः । आदातुमैहत धनुः प्रथमो रघूणां पैतामहं प्रथमसर्गसमापनाय ॥ २२ ॥ आदाय च दुरापं चापभारोपयत विशिखमनलशिखम् । नाथो विमोक्तुमुदयुङ्क्त न यावदेव पाथोनिधेरुपरि पावकरूपमस्त्रम् । सन्तापिनी नयनवारिभिषेण ताम्यन् मन्दाकिनीं किमुत वारुणमाललम्बे ॥ २३ ॥ रुषा विशिखमुच्छिखं जहति राघवे लाघवाद् अजायत रुजायतश्वसितनक्रचक्राकुलम् । रसातलवलत्तिमिस्तिमितकुम्भिकुम्भीनस प्रविष्टगिरिकन्दरन्तरल-

मन्तरं वारिधेः ॥ २४ ॥

ततृत्तणं जलनिधिः क्षन्ता च युगान्तानलस्य महतोऽपि गरलदाहनोष्मणां सोढापि वाडवगाढावलेपस्य तितिक्षुरपि भार्गवतीक्ष्णशरयोः परिशोषयन्तमन्तरङ्गमङ्गारमयं शरमयं निमिषमपि न विषेहे ।

शरणमय शरव्यथानिदानं जलनिधिरेष जगाम राममेव । परुषकुलिशपातमेव किं वा जलधरमर्थयते न जीवलोकः ॥ २५ ॥

आगत्य चानुपदमुदीक्षतनूतनरत्नराशिर्वारिराशिर्विनीतवेशो विशेषोपजातनतिभिर्नुतिभिरभ्यनन्दयद्रघुनन्दनम् । तदनु तदनुसंहितममोघमस्त्रं वैधात्रं कुत्र चन वन्सोमनि विनिपात्य साध्यते मया सलिलविष्टम्भः सम्प्रत्येव नलो विदधातु सेतुमित्यभिदधानो मन्दमन्दमन्तरधात् ।

आदिष्टा रघुपुङ्गवेन हरयोऽप्यष्टासु दिक्षु क्षणात् त्रैलोक्याञ्चितमूलमध्यशिखरान् धात्रीधरान् आहरन् । यैः क्षिप्तैः सलिले नलेन जलधिर्यातोऽपि जम्बालतां निर्गच्छत्य चिराय निर्झरपयः पूरैः पुपूरे पुनः ॥ २६ ॥

अथ जलधौ निपेतुरतिदूरनिपातदलज्जलचरदत्तजीवनवगन्धमहौषधयः । स्फुटितधराविराजदहिपुङ्गवफूत्करणक्षुभितगुहागृहासिक्तमहाहरयो गिरयः ॥ २७ ॥ अलक्षितमहीधरग्रहणमस्फुटक्षेपणं विचित्रघटनं ततो विरचितो नलेनामुना । अशोधि हरियूथपैरधिपयोधिसेतुर्महान् भुवो भुजङ्गाभवन्निजतनूभुवो लम्भयन् ॥ २८ ॥

अनन्तरं अन्तर्मुखा इव बलीमुखाः प्रबोधेनेव सेतुपथेन

संसारमिव दुस्तरन्तरणिपतिमतीत्य सद्य एव प्रकाशं गिरे-
शं सुवेलमवलोकयन्तो मुहुरविन्दन्त महान्तमानन्दम् ।

बलयिततटदेशैर्वाहिनीनां निवेशैरविरलवनरेखामध्य-
मध्यास्त रामः । कपिकलकलशौर्यत्कन्दरामन्दिरान्तस्स्खलि-
तकुपितसिंहव्यस्तवेलं सुवेलम् ॥ २९ ॥

तदनु दशमुखः शुकमुखार्दातलङ्घितजलधिमधिगतसु-
वेलारामं रामं निशम्य सम्यगवगमनाय रघुनायकबलमनु-
प्रहितयोर्भेदितवेषविभीषणावेदितकुपितकपिलोकनिर्दयत्व-
णनितान्तखिन्नयोर्विपन्नाधारदाशरथिदिसोचितप्राणयोः शु-
कसारणयोर्वचसा प्रासादाग्रमासाद्य प्रत्येकशस्तदावेद्यमा-
नान् प्रवर्द्धमानसमरसन्नाहमतीन् प्लवङ्गमसेनाधिपतीन् अ-
तिधीरतया सावधीरणमवेक्षमाणः प्रतिपक्षबलप्रशंसिनौ
तावुभावप्युपेक्षमाणः शार्दूलप्रभृतिभिः प्रणिधिभिरप्यवगता-
शेषवृत्तान्तः सान्तस्तापः सुचिरमनुचिन्तयन् अन्तिकासीन-
मतिविनयप्रह्वं विद्युज्जिह्वमुपह्वरे किमप्यभिधाय सौधा-
दवततार । तत्क्षणं क्षणदाचरोऽपि निदेशान्निशाचरपते-
र्दाशरथिशिरः सशरन्धनुरपि निर्माय मायानुभावादाहवा-
नीतमित्यभिधाय निधाय च पुरो निदाघातिशयसन्तापिनीं
वासन्तीमिव वैद्युतानलस्थिरकालविह्वलामाकुलीचकार मै-
थिलीम् । ततः प्रबुद्धा च मुग्धा पुनस्तथ्यमिति विचार्य्य
तदनार्य्यं पर्य्यदेवयत पतिदेवता ।

रक्षोवरोधवसतिं रजनीचरीणां रक्षोपरोधमपि रावणभर्त्सनञ्च । सर्वं सहे यदुपलम्भधिया स एव सर्वंसहे
भवति जीवति हन्त शता ॥ ३० ॥

एवमत्याहितमत्यासमेतामेतामेतामासाद्य सखि वैदेहि वैदेहि वचः कथमियं तव दीना दशा दशाननकृता मायाहि मायाहि मनसि वैधुर्य्यं निखिलजगती धुर्य्यभुजबलाभिरामे रामे किमिदमनार्य्यमविचार्य्येमित्यभिदधाना नवीना सारनिष्यन्दिनी कादम्बिनीव घर्म्मोद्वेगिनीं केकिनीं सरमा चिरमाश्वासयामास ।

अथ निगदितनीतिं मुञ्च मुञ्चेति सीताम् अविरतरणकण्डूभीषणो रावणोऽयम् । मनसि न बहु मेने मन्त्रिणं माल्यवन्तं दिवि परममरीणां मण्डलं माल्यवन्तम् ॥ ३१ ॥

अथ रामोऽपि कामो चतवेषविभीषणामात्यविदितरक्षोनगररक्षोदन्तो हृदन्तोपजातसमरसंरम्भविधिरम्बुधिमेखलालङ्कारमणेर्लङ्कायाः प्राग्द्वारस्थाय प्रहस्ताय पर्य्यस्ताहितप्राणानिलं नीलं दक्षिणद्वाररक्षिणोर्महोदरमहापार्श्वयोर्बिम्बलयविजयधौरेयत्वारेयं प्रत्यग्द्वारपालनाधिकृते पाकशासनजिते पराक्रममिव तनूमन्तं हनूमन्तमन्तर्व्यूहविहितरक्षाय विरूपाक्षाय रक्षःप्लवङ्गमकृत्नाधिपतीन् प्रतिनिधीन् विनिधाय विधाय च सज्जं धनुरनुजेन समं समीकाभिमुखेन दशमुखेन गुप्तमुत्तरं गोपुरमुत्तरङ्गो बलैरुपरुरोध ।

अत्याकुलां हरिबलैरवलोक्य लङ्कां दत्तार्गलेषु दशकन्धरकिङ्करेषु । आरक्तकैस्त्वरितमन्तकराजधान्यामुद्घाटिताभिरुदभाविकवाटिकाभिः ॥ ३२ ॥

तत्क्षणञ्च लक्ष्मणाग्रजः सुग्रीवेण सह सुवेलाचलकटमधिरूढ़ः क्षितिभृत्प्रवनीवरचूड़ामणिं सिंहनादीरकमलककर्णिकां

निर्माणकौशलीं विश्वकर्मणो निवेशदरीं निशाचरहरीणां अनारतवन्दीकृतामरपुरन्ध्रीवाष्पनदीमातृकोपवनसीमान्तां सीमान्तरात् निरन्तरसेवासमागतदिक्पालमातङ्गमदाम्बु-पङ्किल वाह्याङ्गणोत्सङ्गां लङ्कामवलोकमान स्तत्रैकत्र समु-न्नतं सौधमधिवसन्तं सन्तमसमिव सदेहबद्धमन्तिकचरोद-स्त विमलमुक्तातपत्रमिषात्सतारकेण विभावरीपतिनेव सेव्य-मानं वैमानिकवधूविधूयमानचामरवृन्दशोभितमञ्जितमन्दा-किनीपरीवाहमिवाञ्जनाचलमखिलजगद्विजयवर्णावलीमति-निर्णायकैरनेकविधसमीकाभिघातमग्नभग्नै रवणविषाण कु-लिशाग्रैरुद्गीर्ण विशालवक्षःस्थलफलकमानीलतमालरुच्छा-यमाच्छादिताभिनवलोहितपटमापाटलसन्ध्यारागबन्ध, रङ्क-म्बरमिव ददर्श दशकन्धरम् ।

कोपादुत्पतितस्तदा हरिपतिः कोटीरमुत्पाटितं चक्रे नैर्ऋतनायकस्य सुदृढ़ीचक्रे च वै भीषणम् । युध्वा च प्रध-मावमान कुपितेनैतेन बुध्वा ततो मायामस्य जगाम कोम-लगुणग्रामं स रामं पुनः ॥ ३३ ॥

ततस्तत्साहसोपलम्भविधिना दाशरथिना समामन्त्र मन्त्रिभिः समादिष्टः साधिष्टभुजशौर्य्यशाली वालिनन्दनः सलीलं सालमुल्लङ्घयन् लङ्कां प्रविश्य नृशंसमिति शशंस निशिचरपतिम् ।

सोऽहं प्लवङ्गमपतेस्तनयस्त्वदीयनिश्वासरोधिनिजबाल-धिमण्डलस्य । कालस्य दूषणखरत्रिशिरोमुखानां पौलस्त्य ! मां रघुपतेरवधेहि दूतम् ॥ ३४ ॥ रक्षःपते ! रघुपतेर्नयनं तृतीयमास्कन्दनीयमितिहा मनुषे कलत्रम् । अम्भोजमित्य-

नितकसम्भ्रम मचि शम्भोः मन्दाकिनी मधुकरस्तु यथा मदान्धः ॥ ३५ ॥ किञ्च । एकं हैहयसम्भ्रमात्परिभवान् म्लानं द्वितीयं पुनर्दैत्येन्द्रा विनयात्तृतीयमपि मे तातादिताद्वैक्लताम् । इत्थं त्वच्चरितं पितामहमुखान्येकं विनैवाभवन् तच्चैकं न विधेहि दाशरथये देया त्वया मैथिली ॥ ३६ ॥ कौवेरस्य तु पुष्पकस्य हरणं कैलासविक्षेपणं दिक्पालाक्रमणञ्च जल्पसि मुहुः किम्वा यशस्तावता । वेषं संयमिनो विधाय विजने देवीं वने जानकीं वेगादाहरता त्वयाद्य रचितां वीरव्रतस्योचितम् ॥ ३७॥ किं बहुना । पूजोपहाररचनाय पुरा पुरारेश्छिन्नेषु मूर्द्धसु नवस्ववशेषितं यत् । देवस्तदद्य कुतुको दशमं शिरस्ते रामो बलिं रचयितुं रणदेवतायै ॥ ३८ ॥

एवमरुन्तुदभाषणरोषणेन रावणेन गृह्यतामयं निगृह्यतामिति सरयमादिष्टानालम्बितभुजप्रकोष्ठानाशरांश्चतुरश्चरोऽयं भुजङ्गानिव विहङ्गाधिपो गृहीत्वा भुवि निपात्य चैतान् पादाङ्गुष्ठेन प्रासादशृङ्गमपि भिन्दन्नलिन्दनात्मनः प्रतिरथं पङ्क्तिरथभुवो विवेश निवेशम् ।

रघुतनयस्ततो विदितरावणदुर्विनयः कुपितमना सनागिव दधे कुटिलां भ्रुकुटीम् । अथ परिवव्रु राशरपुरं हरयः सरयंयुगविगमे यथा युगपदम्बुधि मौर्वशिखाः ॥३९॥ ततो मदपरिश्रमपवनोरसंरम्भ न्त भितकोणपप्रकरपाणिकोणाहतः । रवैरधिकभैरवैरूपरोध रौद्रोन्तरं तरङ्गितघनाघनस्तनितबन्धुभिर्दुन्दुभिः ॥ ४० ॥

तेन च समन्ततः कन्दलयता दलयतेव जगन्ति दुन्दुभि-

निर्वोषेण रोषेण च प्रेर्य्यमाणाः केसरिण इव गिरिकन्द-
रान् मन्दिरान् निर्गत्य गत्यन्तराय सन्धाय काव्यपत्यानि वा
निमित्तान्य नवलोकमाना विमानाधिगतविबुधसीमन्तिनी-
भिः सह विजिहीर्षयेव प्रस्थानसमयपरिम्लानमुखीः सुमुखी-
रप्यगणयन्तो निरन्तरज्वलितकोपानलनयनकोणारुणाला-
तघ्नर्तनिपातविलासचलितनिजवःरणा इव रणावेशपरवशाः
दिशासु दशसु विरचितशिवारवाम्रेडितव्याकुलीकृतकुलमहीध्रा-
गृध्रायतपक्षविक्षेपकृतपताकानिकाय पुनरुक्तसमुत्तुङ्गशताङ्ग-
सङ्घातपरिगता नितान्तनिशिता कृतान्तदंष्ट्रा खरतरनखर-
पट्टीरुप्रासपरशुगदामुसल शक्तितोमरमुद्गलपरिघद्रुघणकृपा-
णधारिणो दारुणा जगरसन्तानसंवीता इव विन्ध्यकूटा व्यू-
ढातिकरालकालायसकङ्कटा विकल्पा इव कल्पाम्बुदानां व्य-
क्तय इव कालरात्रेर्विवर्त्ता इव कलिकालस्य च भयङ्कराः
समराङ्गणमवतारयन्तः समीरयन्तो वीरवादानादाय च श-
रासनमासारैरिव गिरिमम्भोधरा दूरापातिभिः शिलीमुखै-
र्वलीमुखबलमखिलमच्छोभयन्तरक्षोभटाः ।

ततो धुतनखयुधस्तरुपरिलुटत्तोमरः शिलानिहतमु-
द्गरः शिखरिभिन्नमत्तद्विपः । स्वपक्षविजयैषिभिर्दिवि सु-
रासुरैराकुलैरलक्षि हरिरक्षसामतिभयङ्करः सङ्गरः ॥ ४१ ॥

क्रमेण च कुपितकपिवीरविदूषितनैर्ऋतभुजप्रतापानल
इवास्तं भजति भगवति भानुमति मथितायुधयातुधानगल-
नालप्रणालपरिवाहि लोहितनदीपूर इव विदूरमन्तरित ह-
रिदाभोगे सन्ध्यारागे विक्रान्तहरिनखाक्रान्तदन्तावलविपु-
लकुम्भस्थलमुक्तमुक्ताकलाप इव वियति विजृम्भमाणे ताराङ्ग-

ले रणरभसचलितरथगजतुरगपदातिपादाहतविश्वम्भरान्त-
राल जनुषि रजसीव भुवनमास्कन्दति तमसि तामसीचरे-
ष्विव सशोकेषु चक्रवाकेषु दाशरथिबल इव प्रमदाकरे
कुमुदाकरे ।

आसारधारां प्रकिरन् शराणामाश्वासयन्मानसमाशरा-
णाम् । वीरो हरीन् संयति मेघनादो विव्याध हंसानिव
मेघनादः ॥ ४२ ॥ रणे तदनु दारुणे रभसमङ्गदो रावणेर्दु-
मेण महता हतःस्वयधुरीणयानव्रजम् । शितेन शतकोटिना
शिखरिकूटमिन्द्रो यथा ममाथ च रथं मनोरथमपि चणाद्र-
चसाम् ॥ ४३ ॥ वियत्तले तदनु विलीयमायया सलक्षयन्
रघुतनयं सलक्ष्मणम् । अजिह्मगानधिमतजिह्मगाकृतीन्
अमर्षतः समिति ववर्ष रावणिः ॥ ४४ ॥ लक्ष्मणानुगतं
रामचन्द्रं राक्षभयङ्करा: । बबन्धुर्दीर्घतमा बन्धच्छिदममी
शराः ॥ ४५ ॥ यावद्याति पुरं पुरन्दरजयी यावद्दशास्या-
ज्ञया सीता पुष्पकवासिनी रघुसुतौ दृष्ट्वा पुरः शोचति । ता-
वत्तो गलिता सुपर्णगरुतां वातेन वाताशना दीप्तौ चन्द्रदि-
वाकराविव तमो मुक्तौ ततो राघवौ ॥ ४६ ॥ दुर्वारे तदनु-
द्वयोस्र बलयोरुज्जृम्भमाणे रणे धूम्राक्षं भुजतः प्रकम्पनमथ-
द्वेधा व्यधान्मारुतिः । तारेयोऽपि च वज्रदंष्ट्रमचलान्नीलः प्र-
हस्तं बलात्तत्सर्वं दशकन्धराय चकितैरक्षञ्च नक्तञ्चरैः ॥४७॥

अथ तदानीमनीकिनानायबधकोपोदय.दायोधनोत्-
कण्ठो दशकण्ठः सकलजगदण्डभरितभयानकभयानकार्मि-
नदवधिरिताशेषशेषाहि लोचनो रोचिष्णुजिष्णुकोदण्डध-
रः सखिलधर इव सुमेरुशृङ्गं समुत्तुङ्गं रथमलङ्कुर्वन् स-

र्वतस्वजितसकलचतुरङ्गसङ्गतया लङ्कयेव स्वयम् अनुगम्यमानः क्रमादतिक्रम्य पुरतो रणं पुरतोरणचलितमालोकयत निखिलमपि वलीमुखबलम् ।

जेतारमाहवमुखे दशदिक्पतीनां दृष्ट्वा पुरो दशमुखं रघुनन्दनस्य । स्लाघावशेन न चचाल शिरः परन्तस्यान्तर भुजशिरोऽपि समीच्य लच्यम् ॥ ४८ ॥ अथ मदगर्जितैरधिकतर्जितदिक्करिभिर्दशवदनस्तदा दशदिगन्तरयन् । समरमुखे सखेलपदचक्रमतो विदधे हरिकुलमाकुलं जलधिमादिवराह इव ॥ ४९ ॥

अनन्तरमनीकास्कन्दकन्दलितामर्षं वर्षन्तं गिरीन् हरीणामधिपतीनतिनिष्ठुरेण मुष्टिना गाढमभिनिघ्नन्तं हनूमतममन्दलाघवाक्रान्तध्वजकिरीटाञ्चलं नीलमपि निखिलजगज्जिता महता बलेन वातूल इव तूलजालं कपिकुलमपसारयन्नविरतशरासारवर्षिणमभ्यमित्रीणं सौमित्रिमपि शक्त्या गाढमुरसि विव्याध क्रव्यादाधिपतिः ।

अवकीर्य्य दाशरथिरशुभ्रैरनुजं पुलस्त्य तनुजञ्च शरैः । युगपद्दधात्करुणवीररसौ युधि शोकहर्ष शबलञ्च बलम् ॥ ५० ॥ आधूय मोहमहितोन्मथनाय यावत् सौमित्रिरेष समुदञ्चति तावदेव । पौलस्त्यमेष परिभूय परं तदीयान् प्राणान् मुमोच दयया न मुमोच बाणान् ॥ ५१ ॥ प्राप्य तत् प्रथमं युद्धे पराजयमुदे जयन् । दशाननः पुरीं प्राप दिनदीपदशाननः ॥ ५२ ॥ प्राबोधयत्तदनु पङ्क्तिमुखः शयालुं कालं विनापि च कथञ्चन कुम्भकर्णम् । आदेशतः स च विभोरपुनः प्रबोधसंवेशधाम समराङ्गण माजगाम ॥ ५३

आगतञ्च तमञ्जनाचलनिकाशकाशतलभ्रमितत्रिशूलं शूलवरमिव जातुधानयोद्धारं नरान्तकमेवलोक्य शाख्यत्महजभुजतेजोविशेषमशेषासु दिक्षु धावमानं पवमानचलिततूलराशिमिव त्रस्तप्लवगबलमङ्गदो धीरमवादीत् ।

कस्यः चैकस्ये रानां कापि सेयं विभीषिका । अभूतपूर्वं वः प्राकृतं भयचेष्टितम् ॥ ५४ ॥

अथ हरयोऽपि सरयमनुनयसङ्गतमङ्गदवचनमवधारयन्तो धारयन्तः समरसन्नाहान्दिग्भागा इव प्रतिनिवृत्ताः प्रयत्ताश्रयमिवैरावणं रावणानुजं विन्ध्याचलमिव युगान्तानिलाः समन्तादाहृतैर्गिरिभिस्तरुभिरप्यवाकिरन् ।

क्षिप्ताः संयति पुष्पिताः क्षितिरुहास्ते रक्षसो वक्षसि । प्रस्विन्ने पटवासपांसव इवालीयन्त चूर्णीकृताः । मुक्ता ये धरणीधरा मुहुरमी तद्गाङ्गमङ्गट्टनात् प्रत्याहत्य परं प्रहर्तुरभवन् खेदाय भेदाय च ॥ ५५ ॥ ज्वलदनलं त्रिशूलमुपरिभ्रमयन्नमयन् नयमवनीमनीकमटखेलनदुर्ललितः । सपदि बभञ्ज नीलमृषभं शरभञ्च बलादहरत गन्धमादनमरुन्ध गवाक्षमपि ॥ ५६ ॥

ततश्च सहजबलचापलाधिगतलाघवं राघवं शरणमभ्युपाणं रावणानीकमाश्वासयन् विश्वाधिकविपुलभुजवीर्य्योर्किकोर्य्यैद्विषति सर्वतः सर्वतान् विधाय विचित्रमति चिरं युद्धं नरान्तकविमुक्तधालीधरवशः कुलिशदारित इव कुलभूधरो धरायामचेतन इव पपात हरिकुलपतिः ।

परिगृह्य तं झटिति वाहुपञ्जरे चलिते पुरं तदनु रावणानुजे । अविनीत वालिकृतमद्य नः प्रभोरयशः प्रम-

ष्टमिति हृष्टमाशरैः ॥ ५७ ॥

तत्र विचित्रकुसुमपरिमलशिशिरोपचाररुचेतनोऽङ्गीव सुग्रीवनखमुखाकलितशूर्पणखामुखानुकारः सचमत्कारमुत्प्लुत्याधिगतमेनमनालक्ष्य वैलक्ष्यतः प्रतिनिवृत्तो निवृत्तोद्धृत्तारकेक्षणः क्षणदाचरः प्रतिक्षणमतिक्षीवतया प्रतिपक्षबलमिव स्वपक्षबलमपि भक्षयन्न लक्षयन् सौमित्रिमद्रिशिखरान् विमुञ्चन्नेवायसञ्जसा राममभाजगाम ।

भिन्दन् शूलमथ द्वैचन्द्रमुखतो वीरो रघूणां पतिर्बाणानत्र मुमोच वालिविपदो मारीचमर्मच्छिदः । आलोक्याथ स तान्विदारितशिखानस्मिन् न किञ्चित्करान्दायर्यं पुनरैन्द्रमप्यरिवधूवैधव्यधूर्यं दधे ॥ ५८ ॥ रामास्त्रोद्दलितेषु राक्षसपतेरङ्गेषु तुङ्गो भुजः प्रागेको निपपात मन्दर इव प्रत्यर्थिसेनाम्बुधौ । सिन्धौ निष्पतितः परोऽपि ददृशे सेतुर्द्वितीयो यथा छिन्नं व्योम्नि शिरस्तुरीयमभवत् कूटं त्रिकूटस्य च ॥ ५९ ॥

तदनु तदनुमोदभरितहरिबलकोलाहलाकर्णनविदितकुम्भकर्णवधपरिम्लानमुखेन दशमुखेन सहोदरमहोदरमहापार्श्वौ सहायौ विधाय समादिष्टाः कुमाराः नरान्तकदेवान्तकातिकायत्रिशिरसः पितुर्निर्देशान्निवेशमिव पितृपतेः प्राविशन्नमी समीकभुवम् ।

अजनि पुनः समीकमनयोरुभयोर्बलयोरवदलिते मुखे च यदनुज्झितरोषभरम् । अमरमृगीदृशामपि यदाशयपूर्तिकरं समरसमुत्सुकेन मुनिना यददृष्टचरम् ॥ ६० ॥ ममाथ शैलैरथ वालिनन्दनो नरान्तकं संयति वानरान्तकम् ।

हनूमता सोऽपि हतः सुरान्तकः पुरान्तकेनेव यथा पुरान्तकः ॥ ६१ ॥

अनन्तरमसमसमरशीलेन नीलेन निहते महोदरे मारुतिमथितशिरसि त्रिशिरसि विश्वसितेषु महापार्श्वादिषु वाहिनीपतिषु निर्भरविषादरोषपरवशो निशाचरः स्फार इव तमोनिकायः सत्यमतिकायः समागत्य हतासुर इव सुत्रामूणा सुमित्रासुतेन सह वितेने विचित्रमायोधनम् ।

स च सुचिरं नियुध्य तमबध्य इतीव वरादनिलगिराविबुध्य पुनरस्त्रमधत्त विधेः । दलितमनेन तद्दिवि समुत्पतितं जगतामतनुत राङ्गमीतिमधिकामतिकायशिरः ॥ ६२ ॥ अनुनीय रावणिरथो विधुरं पितरं दधत् पृथुसमीकधरम् । सरथी समेत्य सधनुःशरधिस्खलितस्वभूभिरधिदाशरथी ॥ ६३ ॥

अधिसमरमरातिजयमनोरथाय रयाभिरक्षायै रक्षांसि परितः प्रकल्प्य प्रतर्प्य च हविषा प्रदक्षिणशिखावन्तं मन्त्राश्रितानि विचित्राण्यस्त्राणि दधानस्तिरोधानगत एव शितमुखैः शिलीमुखैर्निर्माय निखिलमर्मोहतिं निस्त्रिंशक्रमः क्रव्यादो व्याध इव हरीन् विधुरीचकार ।

सहलक्ष्मणं तमपि दाशरथिं परुषो निदाघ इवपद्मसरः । विकलाशयं विधुरसत्वमयं विरचय्य धाम च जगाम शरैः ॥ ६४ ॥ हतार्कभवतेज सि क्षपितरामचन्द्रद्युतौ विमुच्य सति निर्गते विशिखवृष्टिमस्मिन् घने । अदीप्तनलमस्फुरत्कुमुदमस्तनीलोत्पलं समुत्तरलजीवनं समभवत्तदा वाहिनी ॥ ६५ ॥ अचलमथ सलीलमोषधीनां हरति हनू-

मति जाम्बवन्नियोगात् । विचलितमभवद्बलं विशल्यं विबुधमनोऽपि धूतशोकशल्यम् ॥ ६६ ॥

तेन पुनः सहजतेजोभरितेन दावानलेनेव वानरबलेन दह्यमानां दरीमिव पुरीं विहाय पञ्चाननाविव पङ्क्त्याननिदेशतस्खलितमखिलरिपुप्रकम्पनमकम्पनमाहतप्लवङ्गसङ्घं प्रजङ्घञ्च अङ्गदभुजप्रतापानलशलभावुभावपि निशम्य निशम्य च द्विविदमैन्दावदारितौ महारथौ शोणिताक्षयूपाक्षावपि कोपाक्रान्तपरुषसंरम्भौ कुम्भनिकुम्भौ समुत्तम्भ्य बाहुं सुबाहुमारीचाविव राघवभुजाभ्यां सुग्रीवहनूमद्भ्यामद्भुतं युद्धमथनिपातताम् ।

भूमौ ततः प्लवगराजभुजेन बिद्धमालोक्य कुम्भमसहन्विरहं तदीयम् । शोकादगादनिलसूनुहतो निकुम्भस्तन्नामयुक्तममरीकुचकुम्भमेव ॥ ६७ ॥

ततः कौणपपतिनियुक्तं युक्तमखिलवाहिनीभिराहवाटोपमुखरं खरात्मजं मकराक्षमैक्ष्वाकशरोऽपि विपक्षमपि सपक्ष इव समक्षनयज्जनयितुः ।

कृत्वा मूर्द्धनि शासनं पितुरथो गत्वा रणं रावणिर्हुत्वा महाभुजो हुतभुजं धृत्वा महास्त्राणि च । स्थित्वा व्योमनि मायया शरचयन्त्यक्त्वा च भित्वा चमूं बुध्वा राघवकोपमाप सहसा लङ्कामलं कातरः ॥ ६८ ॥

ततः प्रतीचः प्रतिहराद्यं स प्रातिहारिको निर्गत्य निकृत्यासिना काचिदाञ्जनेयस्य पुरतो मायामयीं मैथिलीमाकुलीकृतमनसि तस्मिन्नाकस्मिकमिदमतथ्यमपि तथ्यमेव बुध्वा चिराय युध्वा निराशे प्रतिनिवृत्ते विद्विषि विप-

त्वपशुविशसनारम्भि निकुम्भिलामासाद्य सद्य एव प्रावर्त्तत सत्रमतिविचित्रम् । तदनु हनूमतः प्रतिनिवृत्ताद्वृत्तमेतदाकर्ण्य विशीर्णमानसो मानसचर इव वज्रनिर्घोषाद्विषादाकुलो राजहंसः संसदि निपत्य सौमित्रिणा समाश्वास्यमानः सकरुणं निश्वस्य विश्वस्य पतिरपि विधुरं व्यलापीत् ।

जन्म तदत्र भवती जनकस्य यत्न्मे देव्याश्चिराय धरणेरणेः शिखेव । वंशे मनारपि बधूरभवत्किमन्यद्रामस्तवापि विधिना रचितोविरामः ॥ ६६ ॥ यतो मुधा भवति यत्र समीरसूनोर्नीलं नलोऽपि भवसेतुनिबन्धनाय । दूरे च पावकशराद्व्यतिक्रमोऽयं तत् केन शोकजलधिस्तव लङ्घनीयः ॥७०॥

इत्यादि परिदेवमानमेनं विदिता शरमाया विशेषो विभीषणः समागत्य देव ! भवतोऽपि किमिदमस्थाने दीनमवस्थानम् । निरन्तराय मखनिर्वर्त्तनाय पुरन्दरारिणा कृतं कृत्रिममेतदित्यवधार्य्य धारय मनसि धैर्य्यमित्यभिधाय तद्वधाय लक्ष्मणं तत्क्षणमेव पुरस्कृत्य निकुम्भिलामुपरुरोध ।

हरिकुलारवतश्चलितस्ततो गिरिदरीकुहरादिव केसरी । अपरिपूर्य्य मखाहवमाहवं स विदधे बलशासनशासनः ॥ ७१ ॥ वातूल इव तूलानां वानराणां रणाजिरे । विद्रावणस्ततो माया विद्रावणसुतोऽभवत् ॥ ७२ ॥

अनुपदमशोकिनीनाथनिधनसंरब्धतरं संवर्त्तप्रवृत्तमिव कृतान्तं समराङ्गणमापतन्तं स्यन्दनगतं तं संक्रन्दनजितं गन्धवाहनन्दनस्कन्धवर्त्ती सौमित्रिः प्रवर्त्तितशिततर-

शरधाराभिः श : धारपाणिरिव जम्भमस्तम्भयत् ।

परस्परमदोत्कटं प्रचुरवीरवादोत्कटं परत्रुटितकण्टकं प्रतिहतास्त्रमस्त्रेण च । जगत्त्रयभयावहं जयपराजयागोचरं वितेनतुरभाविभाविव तदाहवं दारुणम् ॥७३॥ शतधारकठोरशिखैर्विशिखैः शतधा विरचय्य शरासगुणम् । विदधे विबुधेशजितं समरे हतसारथिमप्यथ दाशरथिः ॥ ७४ ॥ यदुचितमहो माय शीलस्य यज्ञुजशालिनः सदृशमथवा युक्तं नक्तञ्चरेन्द्रसुतस्य यत् । शतमखजितः शौर्य्यं यद्वानुरूपमथात्मनस्तदकृत रुषा मन्दो मन्दो दरीतनयो रणे ॥ ७५ ॥

अनुपदमभिविषेण अभिषेण नवति विभीषणे तेन मुक्तां शक्तिमर्द्धचन्द्रेण दारयत् अपारयन् सोढमदसीयमविनयममर्षाकुलः सौमित्रिरमोघं माघवतास्त्रममुञ्चत् ।

पतति स्म तत्प्रथममस्त्रमुज्ज्वलं सशिरस्त्रमिन्द्रजयिनस्ततः शिरः । अनुपुष्पदृष्टिरवनौ दिवौकसामथ बाष्पदृष्टिरमरारियोषिताम् ॥ ७६ ॥ श्रुत्वा शक्रजितः सुतस्य निधनं शोकेन रक्षःपतेः क्लान्तं निश्वसदश्रुपूरभरितं क्रन्दच्च फूत्कारि च । कोपेनाथ विपाटलं कुटिलितभ्रूवल्लिदृत्तेक्षणं जज्ञे दष्टवनोष्ठमट्टहसितोद्वृत्तं समस्तं मुखम् ॥ ७७ ॥

अनन्तरमपाक्रान्तासु सुविक्रान्तेषु पुरन्दरारिमुखेषु नन्दनेषु निहतेषु कुम्भकर्णादिषु भ्रातृषु विध्वस्तेषु प्रहस्तपूर्वेषु सचिवेषु व्यतीतेषु विरूपाक्षप्रभृतिषु सेनापतिषु कपिविमर्दनेन विशीर्णे भवति निखिले बले समन्ततः पौरवधूजनपरिदेवनोत्तरङ्गायां लङ्कायामातङ्कातिशयरोषणो रावणस्तत्क्षणमेव हर्यक्ष इव हरिणीं वरूथीसुतां जिघांसुर-

न्तिकगतेन मन्त्रिणा निवार्यमाणः सारथिना विधिना च सचोदितो दाशरथिविजयविहितसङ्गरः सङ्गरभुवमवततार ।

कोपादसौ परिघयष्टिकुठारकुन्त चापाशुगद्रुहिणशक्ति-कृपाणपाणिः । एकोऽप्यनेकमुखबाहुतया सबन्धुर्लोको यथा समिति लोचनगोचरोऽभूत् ॥ ७८ ॥ अलक्ष्यत सरक्षसामधिपतिः कृपाणं मुहुः प्रहस्य विनिपातयन् प्लवगमण्डलीमौलिषु । अयं तव तवायमित्यधिसमीकमेकैकशो वरानिव विनिर्दिशन्नमरवारवामभ्रु वाम् ॥ ७९ ॥

तदनन्तरमक्षौहिणीक्षोभकन्दलितरुषमतिपरुषविशिखदलितध्वजमर्द्धचन्द्रनिकृत्तधन्वानमस्त्रधारावदारितसारथिमतिविस्मरणीयकरलाघवं राघवानुजममर्षावेगमुक्तया शक्त्या मूहूर्त्तमिव मूर्च्छानिमीलितकुपराग इव कमलाकरमाततान यातुधानपतिः ।

आलोक्य दीनमनुजं हृदि शक्तिघाताच्छोकेन विद्धहृदयः सुतरां स रामः । कोपेन चापमय कुण्डलयाञ्चकार लङ्कापतेरपि ललाटतिपिं विधाता ॥ ८० ॥ अवकीर्य्य दाशरथिरश्रुजलैरनुजं पुलस्त्यतनुजञ्च शरैः । युगपद्दधात्करुणवीररसौ युधि शोकहर्षशबलञ्च बलम् ॥ ८१ ॥ बलयितचित्रचापविनिवारितपङ्क्तिमुखे विसृजति राघवे विशिखवर्षसमर्षवति । अरिषु न कश्चिदप्यथ निवृत्य गतः समरादमरविलासिनीषु नच काचिदलब्धवर ॥ ८२ ॥

अथञ्च पुनरञ्जनीसुतसमानीतमहीधरमहौषधिजीवितानजात्संप्रमुखलब्धमनोरथः समेधम नमाजवः समरकौतुककोपलम्भसंरम्भोदञ्चितपुलककञ्चुकिताकृतिर्दाशर थर -

धिसङ्गरममरसारथिना नीतमतिविशङ्कटङ्कमपि रथं कङ्कटमप्यनुग्रहाय शक्रतोऽग्रहीत् ।

अन्योन्यस्य सदृक्षलक्ष्यमिलनादालक्ष्यशौण्डिर्ययोः शस्त्राशस्त्रिसमुन्मिषत्पुलकयोः सश्लाघयोः साहसे । जाते जीवितसङ्कटेऽपि हसतो मूर्च्छासु विश्राम्यतोरश्रान्तं रघुवीरपङ्क्तिमुखयोरासीदमारणः ॥ ८३ ॥

अथ तयोरश्रान्तमुक्तदिव्यास्त्रयोराखण्डलवृत्तनिभयोरालूनेषु भार्गणेषु अभङ्गुरपरस्परविजयमार्गणेषु बाणगणेषु विच्छिन्नेषु धनुर्गुणेषु अव्याहतसहजसाहसगुणनिकृत्तेषु धुरीणेषु यानेषु निरपायसुराभिहतिनिर्भिन्ने सांयुगीने च रथे परस्परगर्वकल्पविजयमनोरथमजायत भुजायतशोधनमायोधनम् ।

तूणीमुखात्वरितमुद्धरणे गुणेन संयोजनेऽप्यथ शरस्य विमोचने वा । यत्नावलोकितदशास्य दृवातिवेगाल्लोकेन राघवकरस्थिरमालुलोके ॥ ८४ ॥ अद्वैदीरितवीरवादमहरद्रामो यदस्त्रैः क्षणात् तेनैवाङ्कुरता मुखेन जगदे शेषञ्च लङ्कापतेः । साध्ये सत्यपि चातुरीभिरुभयोर्दानुष्कमायाविनोर्विच्छिन्नाननदर्शनेन समभूद् व्रीडारणे रावणे ॥ ८५ ॥

दशाननशरक्षतिक्षरदसृगट्टझरीबुद्बुदैस्तरङ्गितमहेन्द्रकरटकसहस्रचक्षुः पयः । रणे रघुकुलोद्वहः क्षणममानि वैमानिकैर्यथा दशशरोक्षणो वलरुषा कषायेक्षणः ॥ ८६ ॥

तदनु वारुणेन वैश्वानरं वैनतेयेन वातभयं वायव्येन वारिदनैशाकरेण तामिस्रं माहेन्द्रेण दानवं वैष्णवीयेन माहेश्वरञ्च परस्परमेवमस्त्रमस्त्रेण भिन्दानयोरनयोरनिश-

माद्दत्वा गृहादविदितान्यहानि सप्त व्यतीयुः ।

शत्वाग्रस्थित्ये सकौतुकोऽपि दयितां सञ्चिन्त्य चिन्ताकुलामस्त्रेण ज्वलता विधेरपुनरुन्मेषं निमेषेण सः ।

मूर्ध्नः कन्दलितान्मुहुर्मुहुरवच्छेदेऽपि लङ्कापतेरातङ्केन समं समस्तजगतां चिच्छेद सीतापतिः ॥ ८७ ॥ रक्षःपतौ पतति लब्धमनोरथानामातन्वतां दिविषदामथ पुष्पवर्षम् । श्लाघापदं समजनिष्ट परं न रामः कामोऽपि चाकलितशूर्पणखाविकारः ॥ ८८ ॥

अनन्तरमालिङ्गितवसुन्धरं शरतल्पमधिशयानमधिगतनिषङ्गोपधानं यातुधानपतिमधिगत्य निपत्य च सोदर्यौदार्य्यसौहार्दसुलभवैधुर्य्यः कदर्योऽहमिति विहितनिजदूषणो विभीषणश्चिरतरं विललाप ।

अयि समसुखदुःखैरन्वितं बन्धुवर्गैः सहजमपि भवन्तं मुञ्चतः साहसेन । कुलविघ्ननहेतोः कूटधर्म्मानुवृत्तेर्दशमुख मम यावज्जीवमासीत्कलङ्कः ॥ ८९ ॥ आर्य्यस्य रक्षितुमसून्ननुजः स एकः प्राणानमुञ्चत परं युधि कुम्भकर्णः । त्वज्जीवहृत् स्वयमहं मम जीवहेतोरद्यापि हन्त सहते हतको विधिर्माम् ॥ ९० ॥

इत्येवमस्मिन् विलपति विदितवृत्तान्ता शुद्धान्तात्सकरुणमारटन्तीभिरन्तरितयूथपाभिः करिणीभिरिव तरुणीभिः समं समापत्य मध्ये समरमापतितमशनिहतमिव मन्दरं दशकन्धरं समोच्य निहतोपमेव लता निपतन्ती विलपन्ती नाथ नाथेति विषादाहता दयितविधुरीकृतकुररी वा मन्दं चक्रन्द मन्दोदरी ।

या वीक्षितार्जुन पुरा यमराजधानी वीर त्वया निखिलदिग्विजयोत्सवेषु । तामद्य दुर्विधिबलेन समस्तलोकसाधारणः पुनरुपैष्यसि हा किमेकः ॥ ९१ ॥ जनकः स्वयं दनुजवंशनायको दयितो जगत्त्रितयजैत्रशासनः । तनयः पुरन्दरजयीति गर्विता विधिनाहमेवमधुना विडम्बिता ॥ ९२ ॥ राजन्य धर्मविदुषोऽपि रघूद्वहस्य हत्वा यथाग्रजमथानुज पद्बन्धः । आरभ्य वालिनमयं कथमाविरासीदिक्ष्वाकुवंशसहजः कथमेष धर्मः ॥ ९३ ॥ अहह निहता लङ्का वालानलेन हनूमतः परभवनिजा पातिव्रत्यानलेन भवानपि । सुखमहमिहासीना शोकानलेन यदीदृशे प्रभवति न मां हन्तुं प्रायः स एष चितानलः ॥ ९४ ॥

तदहमिदानीं सायन्तनसमय इव सवितुः प्रभा भगवति प्रविश्य जातवेदसि चन्द्रिकेव चन्द्रमसं तडिदिव तडिद्वन्तं भवन्तमनुसरन्ती निर्वापयामि निरन्तरविरहदहनदह्यमानमात्मानमित्यादिकरुणपरिदेवनतीं प्रजावतीं निर्वर्त्य निर्वर्त्य च निशिचरपतेर्यथाविधि निजाज्ञया पितृमेधसमेतं सविधमेधमानविषादं विभीषणमशेषराज्याधिपतिं विधातुमखिलतीर्थोपहृतैरम्भोभिरम्भोधर इव दावानलाकुलं वनस्पतिं रघुपतिरभ्यषिञ्चत् ।

अथ दशरथनन्दनाभिषेकादचिरगतराज्यपदो विभीषणोऽयम् । अनुदिनमभिवृद्धमण्डलोऽभूदरुणकरात्ततपूरणादिवेन्दुः ॥ ९५ ॥ नीतामुदीक्ष्य निभृतेन विभीषणेन सीतामुदारगुणशीलवतीं सतीनाम् । देवस्य तत्क्षणमभूद्दशवक्त्रवैरेरानन्दशोकरसबन्धुरमन्तरङ्गम् ॥ ९६ ॥

तदनन्तरमरुन्धतीव पवित्रचारित्रनिधिरधिदेवता पतिदेवताना मनादिपुंसोऽपि मर्त्यधर्मण: प्रत्यायनाय नायकस्य पुरन्दरमुखान् वर्हिर्मुखान् पुरस्कृत्य भगवन्तमरविन्दासनमिन्दुकलेव पुनरुदेष्यन्ती तपनमिव दहनमवजगाहे ।

प्राविशदर्चिषि परं निजशुद्धिहेतोर्देवो पवित्रचरिता जनकेन्द्रपुत्री । अहश्चिरं हि यदपावनवस्तुसङ्गात् युक्तं स्वयं तदमुना दमुना बभूव ॥ ९७ ॥ विशुद्धशीलामनलानुषङ्गाद्विदेहजां तत्र विलोक्य सीताम् । प्रभां पुन: प्रत्युषसीव पूषा प्रत्यग्रहीत् प्राग्रसरो रघूणाम् ॥ ९८ ॥

अथोदारवीरधिगतनिजप्रशंसाविधिना विधिना पुर: प्रदृश्यमानं विमानाधिगतमहारथं दशरथं प्रणिपत्य प्रतिपाल्य च शिरसि तदनुशासनं पाकशासनवरप्रत्युज्जीवितैर्हरिभिरनुगम्यमान: प्रमोदमानमना: सुग्रीवेण सह सम्भाषमाणो विभीषणं सकरुणमवलोकयन्ननुजेन च सीतया सममयोध्यामधिगन्तुकामो राम: खेचरं विमानमारुरोह किमपि कौवेरम् ।

आरुह्य पुष्पकमयं विदितानि तानि लङ्कोपकण्ठदशकण्ठरणाङ्गणानि । सिन्धुं गभीरमपि सेतुनिबन्धनस्य सन्दर्शयन् स्वगदृशं स जगाम राम: ॥ ९९ ॥ उपरि यथा यथा मणिविमानमुदञ्चति नक्षत्राणि तथा तथा विपुलतामुपयाति नभ: । महीवलये तु पल्वलमवेक्ष्य महाम्बुनिधिं पवनभुवे निवेद्य च हसन्ति परे हरय: ॥ १०० ॥

प्रिये विदेहराजनन्दिनि ! विनतानन्दनमप्यतिशेते विमानवेग: ।

यद्यद्दूरे पुरः तत्तदन्विच्छामि तव शंसितुम् । तत्तदन्वगपि द्रष्टुं तत्क्षणेनापवार्य्यते ॥ १०१ ॥

तरुणि धरणीसुते पश्य ऋष्यमूकोऽयं बिम्बाधरे पम्पासर इदं कम्बुकण्ठिकबन्धनिबन्धनभूरियं करभोरुखरादिकलहस्थलमिदं मधुरालापिनि मम पर्णशालेयं मत्तेभगामिनि ! मायामृगमृगयावनमिदं कुटिलायतकबरि ! गोदावरीयं कुम्भिकुम्भस्तनि ! कुम्भसम्भवायतनमिदं विधुमुखि ! विराधविध्वंसनवनमहोयं विपुलविलोचने ! महामुनेरत्रेराश्रमपदमिदं विदेहराजपुत्रि । चित्रकूटोऽयमिति विविधाः कथाः कथयन्नेवायं भागीरथीपरिसरगतं भरद्वाजमुनेः प्रशान्तं पावनं तपोवनमायासीत् अभाषत च मैथिलीम् ।

प्रसुप्तबर्हिनिश्वासधारणा सुखितः फणी । कण्डूविनोदनोत्कण्ठी कण्ठीरवनखैर्मृगः ॥ १०२ ॥

तत्र भरद्वाजविहितविविधातिथेयः तथैव पदवीं दवीयसीमतीत्य पुनरयोध्यासविधमासीदन्नग्रत एव हनूमदावेदितोदन्तं समागच्छन्तं अरुन्धतीजानिं पुरःसरमजस्रमानन्दाश्रुजलविलुलिता लोकैरमात्यलोकैः परिगतमतिपावनतपोधनव्रतमाजानभक्तिसम्भरितं भरतमवलोकयन्नतिवत्सलमना विमानावरोहणाय दशकण्ठरिपुरुदघटत ।

यानं मदाशयमवेत्य यथाद्यैत तारापथादवतरत्यवनीकुमारि । आसेदुषी सविधमद्य तथा तथाभूरत्यादरेण भवतीमभिगच्छतीव ॥ १०३ ॥ इत्थं वदन् इन्दुमुखीं सलीलं देवं लवङ्गाविपदत्तहस्तः । विभीषणावेदितया ददव्या विमा-

नतो मन्दमवारुरोह ॥ १०४ ॥ प्रणीतमणिपादुकं प्रणतमग्रतः पादयोरुदस्य भरतं जवादुपनयन् भुजाभ्यान्तरम् । अवेक्ष्य च तपःकृशं वपुरतीव वात्सल्यतो नवं नवमिव स्पृशन् न विरराम रामश्चिरम् ॥ १०५ ॥ पश्यन् ननन्द भरतः परिरभ्य दोर्भ्यां सौमित्रिमार्यसमदुःखसुखं वनेऽपि । सोऽयं सुखोपनतराज्यपराङ्मुखाय तस्मै पुनः सहजभक्तिपराङ्मुखाय ॥ १०६ ॥

अथ भरतोऽपि पुरतोऽभिवादितपूर्वजोपलालननिम्नेन शत्रुघ्नेन समं सविनयं प्रणिपत्य जनकेन्द्रपुत्रीमुन्मनीकृत्य सुग्रीवदशग्रीवानुजादीन् सावरोधवधूकान् यथोचिताभिरुपचर्याभिरभ्यर्च्याभ्यर्चितपुरोहितमामन्त्रितमन्त्रिलोकमालोकानुगृहीत पौरवर्गमग्रजन्मानं विमानत एव सवङ्कमानमनयदपनीतजनपरिश्रमं निजाश्रमम् । तत्र च सौमित्रिसीतासखो दाशरथिरतिलोभनीयवत्सल्यां कौशल्यामयशःशल्यजनितशोकातिरेकां कैकेयीमकलिमस्नेहपरिष्वक्तां सुमित्रामपि क्रमादभिवादयन्निजालोकरसनितान्तवर्द्धिततरङ्गाभिरेताभिश्चन्द्र इव पयोधि वीचिकाभिः प्रतिक्षणं परिरभ्यमाणाभिः सलक्ष्मणः केवलमानन्दधुरमविन्दत ।

अथाखिलजगत्पतेरपि रघूद्वहस्यादराद्विधातुमभिषेचनं विचलता गुरोराज्ञया । अनीयत समन्ततो हरिगणेन तीर्थं पुनः विशङ्क्य हृदि मन्थरां न भजतागतिं मन्थराम् ॥ १०७॥ अलङ्कृतः कृतमभिषेकमादरात् अमात्यसंहतिभिरवाप्य राघवः । पुरोन्मुखः पुनरयमानशे रथं मनोरथं स च महारथः ॥ १०८ ॥

तत्र च सेवाविचक्षणाभ्यां लक्ष्मणशत्रुघ्नाभ्यामभितो विधूयमानधवलवालव्यजनः परिजनाचारनिरतभरतोद्दस्तमणिविमलमुक्तातपत्रो विचित्रोपजातमनुजवेषाचाकभिराक्रूढ़मत्तङ्गमातङ्गैरलङ्कृतैराशरत्नवङ्गपतिभिरनुगम्यमानः प्रवर्त्यमानशेषाक्षतकुसुमलाजोपचारपौरपुरन्ध्रीकदम्बसौरभं चलितमञ्जुमञ्जीरमणिकाञ्चीवलयवाचाटितदशदिगन्तरां वाद्यमानमाङ्गलिकभेरीमृदङ्गशङ्खादिकविविधारवश्रवणसमयोच्छलिततरामोदपौरसम्बाधां सौधान्तरगवाक्षचलिततरुणीकटाक्षलेखालोलोत्पलदामतोरणाभिरामरथ्यां तथाविधामयोध्यामाजगाम रामचन्द्रः ।

राज्यं स्वं समुपेयिवान् सविनयैराशेवितो भ्रातृभिः सुग्रीवप्रमुखानपि प्रियसखान् स्वे स्वे पदे स्थापयन् । सच्छन्दः सुचिरं सुखान्यनुभवन् देव्या तया सीतया रामः पालयति स्म कीर्त्तिविभवैरामोदिनीं मेदिनीम् ॥ १०९ ॥ कोलालाख्यमहाग्रहारमहिता कल्पे न संख्यावतां मर्द्धन्येन विशारदेन विधुना श्रीसोननाथोदये । प्राग्भोजोदित पञ्चकाण्डमहितानन्दे प्रबन्धे पुनः काण्डो निर्मित एकचूतपतिना षष्ठोऽपि जीयाच्चिरम् ॥ ११० ॥

इति श्रीलक्ष्मणकविविरचिते चम्पूरामायणे
युद्धकाण्डः समाप्तः ।

श्रीभुवनचन्द्र वसाक द्वारा संवाद ज्ञानरत्नाकर यन्त्रे
मुद्रित कलिकाता निमतला घाट ष्ट्रीट नं ८

